# कतिपय-
# नैपालसंस्कृतग्रन्थकार-
# परिचयः




पधिकृत्-

**शिवराज आचार्यः कौण्डिन्न्यायनः**

कार्यकर्तारः–

आमोद आचार्यः कौण्डिन्न्यायनः
प्रियंवदाम्बा कौण्डिन्न्यायनी
प्रमोद आचार्यः कौण्डिन्न्यायनः
सुमोद आचार्यः कौण्डिन्न्यायनः
सम्मोद आचार्यः कौण्डिन्न्यायनः
यशंवदाम्बा कौण्डिन्न्यायनी
अतिसम्मोद आचार्यः कौण्डिन्न्यायनः



**स्वाद्ध्यायशाला**

प्रकाशिका-

देवी आचार्यानी

स्वाद्ध्यायशालाकुटुम्बस्य कृते

प्रथमं संस्करणम्, १००० पुस्तकानि

२०४८

मूल्ल्यम्-

भारतीयानि रूप्यकाणि १२५।-

नैपालीयानि रूप्यकाणि [illegible]

मुद्रकः-

कान्तिपुरीमुद्रणालयः

लाजिम्पाट्, दूरस्वनः ४११६६४

तत्रैहलौकिकसुखार्थिषु दण्डनीतिर्
वार्त्तेति शास्त्रयुगलङ् गुरुणोपदेश्यम् ।
यः पारलौकिकमभीप्सति शर्म धर्मन्
त्रय्या प्रबोधयति तङ् कृपया महेशः ।।

[ ज्ञान-उपासना-र-कर्मका अधिकारिहरु मध्ये जो कर्मका अधिकारि छन् तिनमा एस लोकको सुख चाहनेहरुलाइ गुरुले दण्डनीतिविद्या र वार्ता विद्या पडाउन उचित हुन्च । जो पारलौकिक कल्याण चाहन्च तेसलाइ कृपागरेर परमात्माले वेदद्वारा धर्म राम्ररि बुजाउँचन् । ]

– गङ्गाधरशास्त्रिणः
(अलिविलासिसल्लापे ४।८८)

# उपोद्घातः

## संस्कृतवाङ्मयस्य महत्त्वम्

## नेपालदेशे

## संस्कृत- वाङ्मय-संरक्षण- संवर्धन-प्रयासः

## संस्कृतशिक्षाया वर्तमाना शोचनीया अवस्था

## तस्या अवस्थाया निराकरणस्य मार्गश्च

### १. संस्कृतवाङ्मयस्य महत्त्वम्

### सम्पूर्णमानवजातेः कृते संस्कृतवाङ्मयस्य महत्त्वम्

भूमण्डलस्य यस्मिन् कस्मिन्नपि भागे निवसतां सर्वेषाम् मानवानाञ्च कृते संस्कृतवाङ्मयस्य प्रभूतम् महत्त्वमस्तीति सुविदितमेव । प्राचीने काले संस्कृत-भाषायाः प्रचारस्य क्षेत्रमतीव विशालमासीदित्यत्र प्रमाणत्वेन फ्रान्सा-ऽऽङ्गल-रोम- शर्मण्य- रुस- ग्रिसादि- युरोप- भाषासु पारसभाषायाञ्च च प्राप्यं संस्कृत-शब्दमूलक- शब्दभाण्डागारम् प्रस्तोतुं शक्यते । पञ्जाबि-हिन्दि-नेपालि-मैथिलि-गुजराति-मराठि-बङ्गालिप्रभृतीनाम् भारतवर्षीयाणामाधुनिकभाषाणाम् मूलं संस्कृतमेवेति तु सर्वविदितमेव ।

संस्कृतवाङ्मये विद्यानामर्थे विविधा विधाः प्राप्यन्ते । **वार्ताया विद्यायाः** कृषिशास्त्रम्, पशुशास्त्रम् (अश्वशास्त्रम्, गजशास्त्रम्), वाणिज्य-शास्त्रम्, स्थापत्यशास्त्रम्, मूर्तिशास्त्रम्, यन्त्रशास्त्रम्, विमानशास्त्रम् आयुर्वेद-शास्त्रमित्यादीनि शास्त्राणि; कामशास्त्रम्, सङ्गीतशास्त्रम्, चित्रशास्त्रम्, काव्यशास्त्रम्, नाट्यशास्त्रम् इत्यादीनि ललितकला- शास्त्राणि, अन्यानि चतुष्षष्टेः कलानामन्तर्गतानि कलाशास्त्राणि, काव्य-नाट्य-कथा-ऽऽख्यायिका-लक्षणादिरूपाण्यनेकानि शास्त्राणि, **त्रय्या विद्याया** वेदाः, वेदाङ्गानि, स्मृति-संहिताः, पुराणानि, उपपुराणानि, इतिहासः, वेदाऽविरोधीनि वैष्णव- शैव- शाक्त- सौर- गाणपत्य- कौमारादीनि तन्त्राणि चेत्यनेकानि शास्त्राणि; **दण्डनीत्या विद्याया** नीतिशास्त्रम्, प्रशासनशास्त्रम् (अद्ध्यक्षप्रचारः), न्यायशास्त्रम् (धर्मस्थीयम्), युद्धशास्त्रम् आयुधशास्त्रम्, खरपट्ट इत्यादीनि शास्त्राणि, **आन्वीक्षिक्या विद्याया** तर्कशास्त्रम्, पदार्थशास्त्रम्, साङ्ख्यशास्त्रम्, योग-शास्त्रम् इत्यादिकानि शास्त्राणि संस्कृतवाङ्मये सन्ति । काव्य-नाट्य-

कथाऽऽख्यायिकादिरूपा ललितकलाप्रधाना नाना- विद्या- सिद्धान्तगर्भा अनेके ग्रन्थाश्च संस्कृते वर्तन्ते । संस्कृतवाङ्मये यादृशी प्राचीनताऽविच्छिन्नता च वर्तते तादृशी प्राचीनताऽविच्छिन्नता चाऽन्यत्र सुदुर्लभा प्रतीयते । मानवसभ्यताया विभिन्नानाम् पक्षाणामितिहासस्योपलब्धेश्चाऽनुसन्धानञ् चिकीर्षूणाङ् कृते संस्कृतवाङ्मयमक्षयो निधिरस्तीति तथ्यं सर्वैस्स्वीकृतवँ वर्तते ।

एवम् मानवानाङ् कृते सार्वजनिकनिधिरूपेण स्थितं संस्कृतवाङ्मयमेतस्मिन् कोलाहलपूर्णे आधुनिके मानवसमाजे नैतिकताया मानवताया विश्वबन्धुतायाश् च प्रसारेऽपि महत्त्वपूर्णम् भवितु शक्नोतीति संस्कृतवाङ्मयस्योपनिषद्-गीतादिग्रन्थानां स्वल्पमपि परिचयम् प्राप्नवताञ् जनानामतिरोहितम् । रोगाणान् निवारणे, मानससन्तुलनस्य स्थापने, मानसबलस्योपलम्भे, शान्तेर् लाभे च योगशास्त्रप्रक्रियाणाम् महत्त्वमपि बहुर्चचितमेवास्ति । उपनिषदामद्ध्ययनात् शोपन् हावर्, बर्ट्रण्ड् रसल्, टोमस् ष्टर्न्स् एलिअट् इत्यादयश् चर्चिताः पाश्चात्त्या दार्शनिका ग्रन्थकाराः कवयश् च गभीररूपेण प्रभाविता इति च विज्ञा जानन्त्येव । मानवजीवनरहस्यान्वेषणे संस्कृतवाङ्मयस्य सर्वोपकारकताऽपि विचारशीलानाञ् जनानां सुविदितैव ।

तावदेव न, भौतिकविज्ञानानुसन्धानार्थम् प्रेरकाणि अनेकानि वस्तून्यपि संस्कृतवाङ्मये प्राप्यन्ते । विख्याता भारतवर्षीया वैज्ञानिका जगदीशचन्द्रवसु-चन्द्रशेखरवेङ्कटरमणादयस् संस्कृतवाङ्मयेन तस्यैकेन शब्देन वा दत्तया प्रेरणया प्रयोगान् विधाय नवीनकवँ वैज्ञानिकञ् ज्ञानम् प्राप्तवन्त इति च तेषाञ् जीवनचरित्राणि ज्ञातवन्तो विवेचका महानुभावाः कथयन्ति । सुसङ्गमनयन्त्रस्य कम्प्युटराख्यस्य कृते सर्वाधिकतया समुचिता भाषा संस्कृतमेव भवितु शक्नोतीति विचारश्च चर्चायामागतोऽस्ति । अतश्च संस्कृतभाषायास् स्वरूपमपि व्यवस्थिततमवँ वैज्ञानिकञ् चेत्यप्यवगम्यते ।

## वैदिकानामार्याणां सर्वेषाम् भारतवर्षनिवासिनाञ् च कृते संस्कृतवाङ्मयस्य विशिष्टम् महत्त्वम्

हिन्दुधर्म इति वैदिकसनातनवर्णाश्रमधर्मस्यैवाऽऽधुनिकलँ लौकिकवँ व्यावहारिकन् नाम वर्तते । ऋग्वेदप्रतिपादित-सिन्धुसभ्यता-पालका वैदिका आर्या एव लोके हिन्दव उच्यन्ते । अतो हिन्दूनाङ् कृते वेद- वेदाङ्ग- स्मृति-पुराणादिसंस्कृतवाङ्मयस्य महत्त्ववँ वर्णनातीतवँ वर्तते । हिन्दुभिस् सह वर्तमानस्य वेदवेदाङ्गादिसंस्कृतवाङ्मयसम्बन्धस्य सर्वथा विच्छेदः क्रियते तर्हि हिन्दूनां हिन्दुत्वमेवाऽपगच्छति । हिन्दूनाञ् जन्मनः प्रभृति मरणयँ यावत् सर्वे

धार्मिकक्रियाकलापा वेदवेदाङ्गादिसंस्कृतवाङ्मयस्यैवाधारे संस्कृतभाषाप्रयोगेणैव च क्रियन्ते । हिन्दुराष्ट्रियतायाम् स्रोतो वेदादेव प्रवहति, हिन्दुनैतिकता संस्कृतवाङ्मयेनैव प्रकाशिता भवति । हिन्दुजीवनपद्धतिर् वेदैर् वेदाङ्गैश्चैव निर्दिष्टाऽस्ति । हिन्दूनाबं विशिष्टायाम् शिक्षापद्धते: परम्परां स्थिराङ कृत्वा हिन्दुराष्ट्रियताम् बलीयसीङ कर्तु हिन्दूनाङ गौरवं वर्धयितुञ् च संस्कृतविद्यापरम्पराया विशिष्टा भूमिका भवति । तस्माद् हिन्दूनाङ कृते संस्कृतवाङ्मयस्यविशिष्टम् महत्त्वमप्यस्ति । हिन्दूनाम् मूलस्य स्थलस्य भारतवर्षस्य प्रदेशेषु हिन्दु-प्रायजनसमुदायेषु वर्तमानानाम् अहिन्दूनाङ कृतेऽपि समन्वयपूर्णाम् शान्तिपूर्णाञ् च जीवनयात्रां सञ्चालयितुम् उपयोगिनो ज्ञानस्य उपलम्भकतया संस्कृतवाङ्मयस्य महत्त्वम् प्रभूतमेव वर्तते ।

## नेपालवासिनाङ् कृते संस्कृतवाङ्मयस्य विशिष्टम् महत्त्वम्

नेपालदेशो भूमण्डले एकमेव हिन्दुराज्यमुच्यते । एतन्निवासिनाङ कृते संस्कृतवाङ्मयस्य महत्त्वम् प्रभूतमस्ति । नेपालवासिनां राष्ट्ररूपेणैकताया एकम् प्रबलं सूत्रन् नैपालीयभाषा वर्तते । सा च संस्कृतमूलाऽस्ति । नैपालीयभाषायाम् अभिव्यक्तिशक्तेर् वर्धनाय सौन्दर्यस्याऽऽधानाय च पदेपदे संस्कृतभाषायाश् शब्दाः प्रयुज्यन्ते । नेपालदेशस्य धर्म-संस्कृति-प्रशासनसम्बद्धस्य शिल्पसम्बद्धस्य कलासम्बद्धस्य चैतिहासस्य महत्त्वपूर्णोऽशस् संस्कृतवाङ्मये सुरक्षितोऽस्ति । नेपालवासिषु मद्ध्ये प्रभूततरेषु मनुष्येषु धर्मभावनाया संस्कृतिजागरणस्य नैतिकतायाः कलात्मकानुभूतेश्च सम्पादने चरित्रबलस्याऽभिवर्धने च संस्कृतवाङ्मयस्य महती भूमिकाऽस्ति । भौतिकविकासस्यापि मूलरूपेण तिष्ठन्त्या वास्तविकहिन्दुराष्ट्रनीतेर् विकासाय च संस्कृतवाङ्मयस्य नितान्तमावश्यकता वर्तते । दैनन्दिनजीवनयात्रायाः कृतेऽपि बहुसङ्ख्यका नैपाला जना संस्कृतवाङ्मयस्यञ् ज्ञानमपेक्षन्ते । अस्माकं हिन्दूनाम् मुख्यायाः परम्परायास् साधीयसः परिचयस्य प्रदाने समर्थानावं वेद- स्मृति- पुराणानावं व्याख्यातॄणावं विदुषाम्; धार्मिककृत्यव्यवस्थापनसहायकानान् धर्ममीमांसकानाम्; धार्मिककृत्यापेक्षितकालनिर्णयसहायकानाञ् ज्यौतिषिकाणाम्; वेद-स्मृतिपुराणादिप्रतिपादित-धार्मिककृत्यपद्धतीनाञ् ज्ञातॄणाम् प्रयोक्तॄणाञ् च पण्डितानाम्; वैदिकदर्शनस्य व्याख्यातॄणावं विदुषाम्; वैदिकदर्शनस्य तर्केण संरक्षणम् पोषणञ् च कर्तुङ क्षमाणान् तार्किकाणाम्; आयुर्वेदज्ञानाङ कुशलानाञ् चिकित्सकानाम्; सङ्ग्रहालयादिस्थानां शिल्पकला- स्थापत्यकलाऽऽयुर्वेदविज्ञानादिविषयाणामनेकेषाम् महत्त्वपूर्णानाङ ग्रन्थानामनुसन्धानङ कृत्वा तेषु स्थितानान् नवानावं व्यावहारिकाणां शास्त्रीयाणाञ् च विषयाणाम् प्रतिपादने प्रकाशने च समर्थानामद्ध्येतॄणाम्; उक्तानां सर्वासावं विद्यानाम्

परम्परायास् संरक्षणे समर्थानाञ्च विशिष्टानां शिक्षकाणाम्, तथा प्रच्छन्नौपनिवेशिक-विदेशि-विधर्मिशासककार्यकर्तृतुल्य-वैदिकधर्मसंस्कृतिपरम्पराचारविचार-शून्य- संस्कृतवाङ्मयपरिचयविधुर-कथित-समाजसेवक-राष्ट्रसेवकानां स्थाने साधारणशिक्षाम् प्राप्तवता जनेन कर्तुं शक्यानि समाजसेवाया राष्ट्रसेवायाश् च विविधानि कार्याणि कर्तुं समर्थानां स्वीय-धर्मसंस्कृति-परम्पराऽऽचारविचाराऽऽदरवतां संस्कृतवाङ्मयपरिचययुतानां संस्कृतमूलकसाधारणशिक्षाम् प्राप्तवतां समाजसेवकानां राष्ट्रसेवकानां राष्ट्रनीतिसम्बद्धकार्यकर्तृणां राष्ट्रनेतृणाञ् च भूमण्डले द्वितीये हिन्दुराष्ट्रभूमिरूपे नेपालदेशे परमावश्यकता वर्तते। एतस्मात् कारणान् नेपालवासिनाञ् कृते संस्कृतवाङ्मयस्याऽतीव महत्त्वञ् वर्तत इति स्पष्टम् भवति।

## २. नेपालदेशे संस्कृतवाङ्मय-संरक्षण-सम्वर्धन-प्रयासः

भूमण्डले जम्बूद्वीपे भारतवर्षक्षेत्रे हिमालयमद्ध्यभागे दक्षिणपार्श्वे नेपालदेशस् स्थितोऽस्ति। एष देशोऽनादेः कालात् प्रभृत्येव वैदिकानामार्याणाम् पुण्यभूमिरिति वेदेषु स्मृतिषु पुराणेषु रामायणे महाभारते रघुवंश-कुमारसम्भवादिमहाकाव्येषु च हिमवतः पर्वतराजस्य महिम्नो गीतत्त्वादवगम्यते। शान्तिप्रिया ऋषयो जनसम्मर्दरहितासु कोलाहलशून्यासु हिमालयप्रत्यन्तपर्वतोपत्यकाधित्यकासु आश्रमान् संस्थाप्य विद्यायास् साधनाञ् कुर्वन्ति स्म। तत्र देवघट्टप्रदेशादिषु वशिष्ठादीनामाश्रमास् स्थिता इति पुराणैतिह्यविदो जानन्त्येव।

भारतवर्षे यवन-शक-हूण-मुसलमान-मुगलानामाक्रमणेषु जातेषु तु वेदस्मृतिपुराणादिविद्यानाञ् वर्णाश्रमधर्माणाञ् चाऽनुपालनन् नेपालदेश एव विशेषरूपेणाऽभूदिति चैतिह्यविदामतिरोहितम्।

रामायणस्य महाभारतस्य च प्राचीनतमं हस्तलिखितम् पुस्तकन् नेपालदेश एव सुरक्षितम्, बहूनां शाक्ततन्त्र-ग्रन्थानाम् बौद्धतन्त्रग्रन्थानाञ् च प्राचीनतमा हस्तलिखितग्रन्था नेपालग्रन्थागारेष्वेव सुरक्षिताः, अश्वघोषकृत- सौन्दरनन्द-सागरनन्दिकृतनाटकलक्षणरत्नकोष- शुभङ्करकृतहस्तमुक्तावल्यादयोऽनेके ग्रन्था अपि अन्यत्र लुप्ता नेपालदेशे एवोपलभ्य प्रकाशकैः प्रकाशिता इति विद्वांसो जानन्त्येव। अन्यत्र दुर्लभानि निष्पन्नयोगावल्यादिग्रन्थहस्तलिखितपुस्तकान्यपि नेपालग्रन्थागारेष्वेव सुलभानीति हरप्रसादशास्त्रिसूनुर् विनयतोषो भट्टाचार्यो नेपालदेशम् अद्ध्येतुस् स्वर्गम् भणतीति च नेपालविद्याविदो विदन्त्येव।

नेपालदेशे लिच्छविसम्प्रशासनकाले संस्कृतभाषाविद्याप्रचारस् स्वधर्म-रक्षाप्रयासश् च प्रशंसनीय आसीदिति तदानीन्तनाः प्रथममानदेवा ऽनुपरमगुप्त-भारवि-द्वितीयजयदेव-बुद्धकीर्तिप्रभृतीनाम् प्रौढाः प्राञ्जलाश् शिलाभिलेखा-दयो लेखास् स्फुटम् प्रकाशयन्ति । कर्णालीप्रदेशे गण्डकीप्रदेशे च संस्कृतभाषा-विद्या-स्वधर्म-रक्षाप्रयत्न उल्लेखनीय एवासीदिति तत्रत्यसुवर्णपत्त्र-ताम्र-पत्त्रशिलापट्टोट्टङ्कितशासनलेखादयो लेखा अवगमयन्ति। मल्लकालेऽपि निगमा-ऽऽगमविद्याया अन्येषाञ्च विषयाणाञ् च संस्कृतग्रन्थानाम् प्रणयनमविच्छिन्न-तया प्रचलद् दृश्यते ।

अर्वाचीने काले ऽपि नेपालदेशे प्रचलन्ती संस्कृतग्रन्थप्रणयनपरम्परा नैपा-लानाञ् जनानां संस्कृतभाषाविद्यासु अनुत्कटमपि गभीरमनुरागञ् व्यनक्त्येव ।

वैदिकसनातनवर्णाश्रम-धर्मानुयायिनामस्माकं राष्ट्र-समाज-कुटुम्ब-व्यक्ति-प्रकृतिविषयाणाञ् विचाराणाम् अजस्रस्रोतःरूपेण वर्तमाना संस्कृत-शिक्षाऽपि अनादेः कालात् प्रभृति नेपालदेशे गृहेगृहे स्वतन्त्रतया धर्माङ्गतया च पण्डितैर् ब्राह्मणैः, धनिकैर् बलिभिश् च कुटुम्बिभिरपि पण्डितब्राह्मणद्वारा सञ्चाल्यते स्म एतया प्रणाल्यैव संस्कृतशिक्षाञ् लब्धवन्तो जनाः पुराकाले महान्तो विद्वांसो ग्रन्थप्रणेतारश् च जाता विज्ञायन्ते । अर्वाचीने काले नेपाल-देशे विद्याविवृद्धये महत उल्लेखनीयस्य राष्ट्रियप्रयासस्या ऽभावाद् विद्यायाम् महती प्रगतिर् नैव दृश्यते स्म, तथापि संस्कृतभाषाश्रितविद्यया राष्ट्रियचरित्त्रस्य साधारणतया संरक्षणन् तु क्रियमाणमेवाऽऽसीत् । यमलपर्वत-मण्डलाधिपतिना श्रीवत्सराजेन वैक्रमाब्दानां षोडशस्य शतकस्य प्रारम्भेऽ-भिनवानि विद्याकेन्द्राणि स्थापितानीति,वैक्रमाब्दानामेकान्नविंश्याश् शताब्द्याः पूर्वेऽर्धे कास्किमण्डलराजेन सिद्धिनारायणसाहेन तु जगन्नाथ-मणिभद्र-कुलराज-हर्षदेवादिपण्डितान् अध्येष्य छात्त्रावासादिव्यवस्थाञ् च कृत्वा भूमिदानेन विद्यालयोऽपि सञ्चालित इत्यपि ऐतिहासिका वदन्ति ।

## ३.नेपालदेशे संस्कृतशिक्षाया वर्तमाना शोचनीयाऽवस्था

एतादृशे व्यतिकरे नेपालदेशे जङ्गबाहादुरेण १९०८ तमे वैक्रमेऽब्दे(?) विद्यालये सञ्चालनीयाया आङ्गलशिक्षाया बीजे रोपिते शनैश्शनैस् संस्कृत-शिक्षाऽपि विद्यालये सञ्चालनीयत्वेन परिणता किल । प्रथममेतादृशस् संस्कृत-विद्यालयो जङ्गबाहादुरपुत्त्रेण सेनापतिना जितजङ्गेन विष्णुहरि-रिमालम् पण्डितन् नियुज्य काष्ठमण्डपनगरस्थे पशुपति देव-पत्तने राजराजेश्वरीघट्टे स्थापित इति सोमनाथसिग्देलो वदति स्म। अन्ये त्वन्यथैव प्रदर्शयन्ति।१९२५-तमे वैक्रमेऽब्देऽपि नीलदेवपण्डित-वाचस्पति-पण्डितौ नैपाल-सम्प्रशासनेन

दैत्तवँ वेतनमुपभुज्य नैपालसम्प्रशासनदत्तवृत्तिभोजिनो विद्यार्थिन: पाठयतस्स्मेति तत्थ्यमिदानीम् प्रकाशमागतन् दृश्यते । विद्यालयेषु वेतनभोगिषु पण्डितेषु संस्कृतशिक्षान् दातुलँ लग्नेषु तत्प्रभावाद् गृहेगृहे स्वतन्त्रतया निर्वेतनतया निश्शुल्कतया च सञ्चाल्यमाना संस्कृतशिक्षा शैथिल्यम् प्राप्ता किल ।

यदा खृीस्तधर्मप्रचारकविद्यालयान् सञ्चाल्य नेपालदेशस्स्य शासनसूत्रधारत्वेनाऽर्थबलवत्त्वेन च प्रभावशालिनाञ् जनानां सन्ततीस् तेषु प्रवेश्य तन्मस्तिष्केषु स्वीयधर्मसंस्कृतिपरम्पराम् प्रति घृणामनादरभावमुपेक्षाभावञ् चोत्पादयितुम् पाश्चात्त्यजनेभ्यो नैपालशासकेनाऽनुमतिर् दत्ता, नेपालदेशस्स्य स्वायत्तताशक्तेर् निधानत्वेन शासनशक्तेस् स्रोतस्त्वेनाऽऽत्मानङ् घोषयिष्यञ् जनोऽपि निस्सङ्कोचङ् खृीस्तधर्मप्रचारकविद्यालये शिक्षाङ् ग्रहीतुम् प्रवेष्टुलँ लग्न:, तदा तु परम्परागतसंस्कृतशिक्षायाञ् जनानामादरोऽपि शिथिलताम् प्राप्तुलँ लग्न: । २०११तमे वैक्रमेऽब्दे पाश्चात्त्यानाम् प्रभावात् नेपालसम्प्रशासनेन २०११तमाद् वैक्रमाब्दात् पूर्वन् नेपालदेशे सर्वन् देशमभिव्याप्य स्थितान् २३३ सङ्ख्याकान् संस्कृतविद्यालयान् रूपान्तरम् प्रापय्य तेषु परम्परागतरूपेण प्रचलितन् दुर्गाकवच-चण्डी–रुद्री-श्राद्धपद्धत्यादिकर्मकाण्ड-शीघ्रबोध-मुहूर्तमार्तण्ड-भास्वत्यादि-ज्योतिषग्रन्थ-चाणक्यनीतिदर्पणहितोपदेश-पञ्चतन्त्रादि–नीतिशास्त्रग्रन्थाऽमरकोष-लघुकौमुदी–रघुवंशादिपाठनन् निषिध्य नेपालदेशे संस्कृतशिक्षाया मूलम् प्रायेणोन्मूलितम् । तच् च राज्ञा त्रिभुवनेन महेन्द्रेण चाऽनुमोदितम् । संस्कृतोच्चशिक्षाया अपि रूपान्तरणन् तदानीन्तनै: पाश्चात्त्यानुग्रहापेक्षिभिरीहितम्, किन्तु तदा संस्कृतशिक्षोच्चपरीक्षाणाञ् वाराणसेय–राजकीय–संस्कृतमहाविद्यालयेन सम्बद्धत्वादन्यैश् च कारणैस् तदा तैस् तथा कर्तुन् न पारितम् । किन्तु यदा २०२८ तमे वैक्रमेऽब्दे राष्ट्रियत्वेन रूपिता अराष्ट्रिया नव्या शिक्षापद्धतिर् नेपालसम्प्रशासनेन वृद्धानाञ् विदुषां सम्मतौ असत्यामपि प्रचालिता द्वारेद्वारे आङ्लविद्यालयान् स्थापयित्वा संस्कृतविद्यालया उन्मूलिता:, संस्कृतविद्यालयानां सम्पत्तयो ऽन्यतो ऽपवाहिता:, षष्ठ्यां सप्तम्याङ् कक्षायाञ् च प्रचलतो विशिष्टसंस्कृतशिक्षणस्स्य निरोधेन संस्कृतशिक्षणसंस्थासङ्ख्याया न्यूनीकरणेन साधारणमाध्यमिकविद्यालयस्स्य षष्ठसप्तमकक्षयोरपेक्षणीयतया निर्धारितस्स्य संस्कृतविषयस्स्याऽपि विद्यालयेषु पठनपाठनयोर् दृढायास् समीचीनायाश् च व्यवस्थाया अकरणेन अष्टम-नवम-दशमकक्षाणाम् पाठ्यक्रमाद् अनिवार्यसंस्कृतपत्त्रस्स्य निरसनेन च ग्रामीणानाञ् जनानाङ् कृते संस्कृतशिक्षा सर्वथा दूरस्स्था दुर्लभा अपरिचिता च कृता, कूटप्रयोगपूर्णतया संस्कृतमाध्यमिकशिक्षापाठ्यक्रमन्

निर्माय तत्र जनानाम् प्रवृत्तौ अर्गला आहिता, जनाभिरुचौ तुषारापातश् च कृतः, वाराणसेय-संस्कृत – विश्वविद्‌यालय–पाठ्‌यक्रम–निरपेक्षतया स्ववैशिष्ट्‌यरक्षाऽनुपयोगितया संस्कृत–शिक्षा–संरक्षणमिषेण संस्कृतशिक्षा–वैशिष्ट्‌यविनाशनाय स्वधर्मनिष्ठा–दूरदर्शितोत्साहशून्याऽऽशापाशबद्ध–प्रमाण-पत्रमात्रधारकजनद्वारा कूटप्रयोगपूर्णतया संस्कृतोच्चशिक्षापाठ्‌यक्रम–योजना निर्मापिता, आचार्यकक्षा–पर्यन्तम् प्रचलिता आयुर्वेद–शिक्षा मद्ध्यम-कक्षा–पर्यन्ता कृता, संस्कृत–शिक्षा–प्रेमि–निकाये 'चण्डाल–चतुष्कम्' इति परिचितानाम् पुरुषाणान् तेषाम् परिचराणामेव च संस्कृत-शिक्षा-सञ्चालने नेतृत्वस्य स्स्थाने स्थापनस्स्य परम्परा च स्स्थापिता, संस्कृतशिक्षा-संरक्षणाय राष्ट्रेण क्रियमाणस्स्य अर्थविनियोगस्स्य वर्गविशेषनेतृत्वस्वार्थ-संरक्षणदृष्ट्यैव परिचालनस्स्योपक्रमश् च कृतः, तदा तु पूर्वमेव कर्पितमूलस् संस्कृतशिक्षावृक्षो राज्ञो वीरेन्द्रस्स्य शासनस्स्य काले पुनरप्युत्खेदितजटस् सर्वथा शुष्कतान् निर्जीवताञ् च प्रापितः।विद्यालयादिसङ्ख्या विद्यार्थिसङ्ख्या च काऽपिदृश्यमानाऽपि स्वविद्याधर्मनिष्ठादृष्ट्याऽकिञ्चित्करी एव प्रतीयते ।

२०२६तमे वैक्रमेऽब्दे समुद्‌भूता, नव्यशिक्षापद्धत्या निगीर्णा नेपालदेशे संस्कृत–विश्वविद्यालयस्स्थापनस्स्य चर्चा २०३९तमे वैक्रमेऽब्दे कूटप्रयोग-पूर्णतया पुनरुद्‌भूता । तथा च राजकीयशिक्षाऽऽयोगेन नेपालदेशे संस्कृतविश्व-विद्यालयस्स्य स्स्थापनं संस्कृतशिक्षाया विकासाय विस्ताराय सुदृढीकरणाय च न, घुष्ट–हिन्दुराज्य–नेपालदेशस्स्य वितंसरूपेण पाश्चात्त्यानुसन्धानाऽभिविनयनिकायानुकृत्यात्मकतया वर्तुम् मार्गो निर्मितः । तथापि २०४१तमे वैक्रमेऽब्दे संस्कृत–विश्व–विद्यालयस्स्य शिक्षण–प्रशासनाऽर्थव्यवस्थानार्थं विषये विस्तृतार्थं योजनाङ्कर्तुं संस्कृतज्ज्ञानां समितिर् नेपालसम्प्रशासनेन निर्मिता, तया समित्या तु राजकीयशिक्षाऽऽयोगस्स्य धारणामस्स्वीकृत्य नेपालदेशे संस्कृतशिक्षाया विकासं विस्तारं सुदृढीकरणञ् च कर्तुं संस्कृतविश्वविद्यालयस्स्य शिक्षणप्रशासनार्थव्यवस्थानार्थं योजना प्रस्तुता । किन्तु सा योजना नेपालप्रशासनेनाऽवकरकरण्डिकायान् निक्षिप्ता ।

२०४३ तमे वैक्रमेऽब्दे नेपाल–सम्प्रशासनेन संस्कृतविश्वविद्यालयस् स्थापितत्वेन घुष्टः । अयवं विश्वविद्‌यालयो राजकीयशिक्षाऽऽयोगानुसारी नाममात्रेण च विश्वविद्‌यालयः, एतस्स्य शैक्षिककार्यक्रमस् सर्वथा निष्प्राणो नेपालदेशे संस्कृतशिक्षाया विकासविस्तारसुदृढीकरणानाङ्कृते अकिञ्चित्करश् च दृश्यते ।

संस्कृतशिक्षाया इदानीन् नेपालदेशे प्रचलितः पाठ्‌यक्रम आङ्लभाषायाः

अनिवार्यत्वाद् विशेषतो धर्मबुद्ध्या संस्कृतशिक्षाङ् ग्रहीतुमिच्छुकान् संस्कृतविद्यालयान् सञ्चालयितुमिच्छुकांश् च बाधमानो वर्तते; हितोपदेशशैलीक-नीतिशास्त्रादीनाम् विषयाणामसमाविष्टत्वाद् गुरुतरशास्त्रीयभारयुक्तत्वाच् च साधारणानाञ् जनानां सर्वासाञ् जातीनाञ् छात्राणाम् महिलानाञ् च प्रवृत्तये प्रतिकूलो वर्तते; वार्ता त्रयी दण्डनीतिः आन्वीक्षिकी इत्येतासां सर्वासाम् विद्यानान् न्यूनतमेन प्रातिनिद्ध्येनापि रहितत्वाच् च सैद्धान्तिकरूपेणाऽतीव विकलोऽपि वर्तते ।

इदानीन् नेपालदेशे आसन्नचत्वारिंशास् संस्कृतमाद्ध्यमिकविद्यालया वर्तन्ते; येषु अष्टम–नवम–दशमकक्षासु (१) नैपालीयभाषा (२) गणिता–(३) ऽङ्गलभाषा–(४) व्यावसायिकविषय–(५) स्वैच्छिकविषयाणामेकैकम् पत्रम्, (६) संस्कृतभाषाया एकम् पत्रम्, (७) वेद–व्याकरण–ज्योतिष-न्याय-साहित्यानामेकतमस्य विषयस्यैकम् पत्रञ् चेति सप्त पत्राणि पाट्ठ्यन्ते । शिक्षा निश्शुल्काऽस्ति । नेपालदेशे इदानीं सप्त महाविद्यालयास् सन्ति; येषु कुत्र चिद् उत्तरमद्ध्यमान्तम्, कुत्र चिच् शास्त्र्यन्तम्, कुत्र चिदाचार्यान्तम्, कुत्र चिद् विद्यावारिद्ध्यन्तम् पाट्ठ्यते ।

किन्तु तेषाम् विद्यालयानाम् महाविद्यालयानाञ् च शैक्षिककार्यक्रमस्य निष्प्राणत्वात् ते सर्वेऽपि वितंसमात्रतयैव सञ्चालिताः प्रतीयन्ते ।

संस्कृतशिक्षाया एतादृश्याः स्थितेः परिणामश् च समाजेऽयन् दृश्यमानो वर्तते यदिदानीन् नेपालदेशे पठितवत्सु जनेषु स्वधर्मे स्वदेशे च स्थित्वा स्वजन्मभूमिम् पुण्यभूमिङ् कर्मभूमिञ् च स्वीकृत्य सुकर्माणि संसेव्य पाश्चात्त्यांस् तद्भृत्यांश् चाऽनपाश्रित्याऽपि मानवोचितञ् जीवनञ् जीवितुम् अस्माभिरस्मत्सन्ततिभिश् च शक्यते इति विश्वासेन युतो जनस् सुदुर्लभो जायमानोऽस्ति । इतोऽधिकम् वैदिकार्य-भारतवर्षीय राष्ट्रियताविनाशस्य वास्तविकनैपालीयराष्ट्रियताविनाशस्य च किम् मूलम् भवितुं शक्नुयात् ।

## ४. नेपालदेशे वर्तमानायाः संस्कृतशिक्षायाः शोचनीयावस्थाया निराकरणस्य मार्गः

अस्माकम् विचारे नेपालदेशे संस्कृतशिक्षाया विकासाय विस्ताराय सुदृढीकरणाय चाऽधोलिखिता व्यवस्था कार्या–

१. इदानीन् नेपालदेशे प्रचलन् संस्कृतशिक्षायाः पाट्ठ्यक्रम आर्थिकदृष्ट्या विपन्नानामेव, उद्बुद्धस्य समर्थस्य स्नेहवतश् चाऽभिभावकस्य मार्गदर्शनमप्राप्नुवताम्, प्रायेण संस्कृतशिक्षाम् प्रति हार्दश्रद्धया रहितानामेव च शिक्षार्थिनाम् प्रवृत्तेर् विषयताम् प्राप्तोऽस्ति । तत्र प्रवर्तमानशिक्षार्थिहृद्गतोद्देश्यदृष्ट्या विचारणे एष पाट्ठ्यक्रमः 'काशीगमनङ् कुतिमार्गेण' इति नैपालीयाऽऽ-

भाणकस्स्य चरितार्थत्वञ्च कुर्वन्नस्ति। एतन् दोषम् परिहर्तुं स पाट्यक्रम: खलु प्रमुखतया (क) धार्मिकोद्देश्यप्रधानै:, (ख) वेदवेदाङ्गादिशास्त्राणाञ्च गभीरमद्ध्ययनञ्च कर्तुमुत्सुकै:, (ग) ज्योतिषायुर्वेदादिप्राच्यविज्ञानानाव्ँ विशिष्टमद्ध्ययनञ्च कर्तुमिच्छद्भि:, (घ) शास्त्रीयताया गुरुकम् भारवँ विनैव स्वधर्मसंस्कृतिवाङ्मयपरम्पराणां साधारणव् ज्ञानञ्च कृत्वा व्यवहारोपयोगिनीं सामान्यां संस्कृतशिक्षामूलां शिक्षाञ्च ग्रहीतुव्ँ वाञ्छद्भिस् साधारणैर् जनैर् महिलाभिश् च स्वस्स्वानुकूला विषया यथा चेतुं शक्यास् स्युम् तथा निर्धारणीय: । वर्तमानस् संस्कृतशिक्षापाट्यक्रम उक्तेषु चतुर्विधेषु जनेषु मद्ध्ये एकविधस्स्याऽपि जनस्स्य आकाङ्क्षायास् साधुतयाऽनुकूलो नाऽस्ति । एतन् दोषन् निराकृत्य संस्कृतशिक्षाया: पाट्यक्रमं समुचितञ्च कर्तुम् [अ] धार्मिकोद्देश्यप्रधानतया संस्कृतशिक्षाञ्च ग्रहीतुं संस्कृतविद्यालयं सञ्चालयितुव् च वाञ्छताम् बाधिकाया आङ्गलभाषाया अनिवार्यक्षेत्राद्पसारणञ्च कर्तव्यम्; [आ] शास्त्रीयाणाव्ँ वेदादिविषयाणां समकक्षतया हितोपदेशशैलीकं नीतिशास्त्रम् इति विषयश् च समावेशनीय:; [इ] अनिवार्यसंस्कृतव्याकरणे कौमुदीपद्धतेर् विकल्पे भट्टिकाव्यपद्धति:, संस्कृतभाषाशिक्षणाधुनिकपद्धतिश् च स्वीकार्या; [ई] व्यावसायिकविषयेषु व्यावहारिकज्योतिषम्, सङ्गीतम्, गृहविज्ञानम्, आयुर्वेदीयस्वास्थ्यकार्यकर्तृशिक्षणव् च स्वीकार्यम् ; [उ] ऐच्छिकविषयेषु गणितम्, विज्ञानम्, इतिहास:, भूगोलविद्या, समाजशास्त्रम्, नेवारभाषा, मैथिलभाषा, हिन्दभाषा, फ्रेञ्चभाषा, आङ्गलभाषा, जर्मनभाषा, रुसभाषा, चीनभाषा चेत्यादयो विषया देया:; [ऊ] शास्त्रीयमुख्यविषयस्स्योत्तरमद्ध्यमायाम् प्रतिखण्डन् द्वे द्वे पत्रे, शास्त्रिपरीक्षायाव् च प्रतिखण्डन् त्रीणित्रीणि पत्राणि निर्धारणीयानि; [ऋ] ऐच्छिकाऽऽधुनिकविषयविकल्परूपेण शास्त्रीयसहायकविषयस्स्य द्वे द्वे पत्रे उत्तरमद्ध्यमायाम्, त्रीणित्रीणि पत्राणि शास्त्रिपरीक्षायान् निर्धारणीयानि; [ॠ] साधारणमाद्ध्यमिकविद्यालयादिषु तत्तत्कक्षासु साधारणपत्रत्वेन निर्धारितमाङ्गलभाषापत्रं षष्ठकक्षात: प्रभृति शास्त्रिकक्षायं यावद् अतिरिक्तैच्छिकपत्ररूपेण निर्धारणीयम्।

२. नेपालीयहिन्दुराष्ट्रस्स्य राष्ट्रियचरित्रस्स्य संरक्षणाय परिपोषणाय च यावत्कालपर्यन्तम् माद्ध्यमिकविद्यालयेषु प्रतिशतन् दश संस्कृतमाद्ध्यमिकविद्यालया:, माद्ध्यमिकपरीक्षार्थिषु च प्रतिशतन् दश संस्कृतमाद्ध्यमिकविद्यालयच्छात्रा न भवन्ति तावत्कालपर्यन्तं संस्कृतशिक्षा सर्वथा निश्शुल्का यथौचिति सवृत्तिका च कार्या ।

३. संस्कृतशिक्षणसंस्थानाम् पर्यावरणं संस्कृतशिक्षाया आदर्शस्स्य अनुरूपञ्च कर्तुं समुचितशैक्षिकनेतृत्वस्य विकासनम्; शिक्षकाणाञ्च कर्मचारिणाम् चोक्ताऽऽदर्शानुरूपाऽऽचार-व्यवहार-वेषभूषा-विचार-वचनादीनामवलम्बनस्स्य व्यव-

ईर्ष्यायाः करणम्; अधिकारिणामपि शिक्षककर्मचारिविद्यार्थिनः प्रति विद्या-धर्म-सत्य-न्याय-वीरता-पराक्रम-कौशल-परिश्रमादिष्वास्थावं वर्धयितुमनुकूलया रीत्या व्यवहरणस्स्य व्यवस्थाया विधानञ् च कर्तव्यम् । संस्कृतशिक्षाकेन्द्रेषु विद्याधर्मसाधनाकार्यं सम्यग् भवतु, संस्कृतशिक्षास्नातकद्द्वारा समाजे विद्यायाः प्रचारणेन धर्मस्स्य संस्थापनेन च राष्ट्रस्स्य आधिभौतिकी आधिदैविकी आद्ध्यात्मिकी चोन्नतिर् भवतु इति हृदि निधाय सर्वैस् संस्कृतशिक्षा-सम्बद्धैर् व्यवहर्तव्यम् ।

४. शास्त्रीयपाण्डित्यपरम्परारक्षायै आचार्यकक्षायान् तत्तद्-विषयेषु प्रविष्टानावं विद्यार्थिनाम् मद्ध्ये इच्छुकेभ्यो योग्येभ्यश्च कतिपयेभ्यो विद्यार्थिभ्यो विशिष्टस्स्य सौविद्ध्यस्स्योपलम्भनम्, तैस् सफलतापूर्वकम् अद्ध्ययने पूर्णे कृतेऽद्ध्यापनादिक्षेत्रेऽन्यस्स्या आकर्षकवृत्तेः प्राप्तियं यावत् तेभ्यस् सहायकप्राद्ध्यापकवेतनतुल्यायाः अनुसन्धानविद्वद्वृत्तेः प्रदानम्, योग्यनिर्देशकस्स्य निर्देशकत्वे आवश्यकविषयेऽनुसन्धानकार्ये तेषान् नियोजनञ् च कार्यम् । एताद्दृश्यावं व्यवस्थायाङ् कृतायामेव शास्त्रीयपाण्डित्यपरम्परायास् संरक्षणं सम्भवेत्। स्वपुत्रान् अन्यत्रैव प्रवर्तयताम्, अनाथा विपन्ना बाद्ध्यता-वशेनैव संस्कृतशिक्षायाम् प्रवृत्ता जीविकोपार्जनचिन्ताग्रस्ताश् शिक्षार्थिनो वेदवेदाङ्गादिशास्त्रपाण्डित्यपरम्परासंरक्षणरूपमतिगहनङ् कार्यं सम्पादयेयुरिति बालिश्यपूर्णवं विचारन् धारयतावं विद्यावैतंसिकानान् धर्मवैतंसिकानाञ् च दिवास्वप्नरूपेण विचारेण किमपि फलन् नैव सिद्ध्येत् ।

५. संस्कृतविद्यालयादिसम्पत्तीनां संस्कृतशिक्षाविकासविस्तारसुदृढी-करणेष्वेवोपयोजनवं विधेयम् ।

६. व्यावहारिकाणावं विषयाणामाधुनिकञ् ज्ञानन् तत्तद्विषयाणामस्माकम् प्राचीने ज्ञाने मेलयित्वाऽस्माकन् तानितानि प्राचीनानि ज्ञानानि परिष्कृतानि आधुनिकावश्यकतापूर्तिक्षमाणि च विधाय विकसितानि कृत्वा तेषा-मद्ध्ययनाद्ध्यापने सञ्चाल्य तत्तद्विषयाणां स्ववैशिष्ट्ययुतायाः परम्परायाः स्थापनस्स्योद्देश्येन कार्यङ् कृत्वा परदेशमूलकाऽऽयातीकृतशिक्षायाः क्षेत्रङ् क्रमेण न्यूनन् न्यूनतरन् न्यूनतमञ् च कर्तुवं विशिष्टप्रकारकस्स्य स्वकीय-शिक्षाक्षेत्रस्स्य विस्तारङ् कर्तुञ् च राष्ट्रेण प्रयत्नः कर्तव्यः, तदनुकूलङ् गहनं शास्त्रीयमनुसन्धानकार्यञ् च सञ्चालयितव्यम् ।

७. संस्कृतच्छात्रावासानां स्थापनम्, तेषां सुसञ्चालनम्, तेषु शास्त्रीय-स्स्याऽद्ध्ययनस्स्य सदाचारस्स्य च समुचितवं व्यवस्थापनञ् च कार्यम् ।

८. पुस्तकालयानाङ् कृते सौविद्ध्ययुतानाम् भवनानाम्, पर्याप्तानाम् पुस्तकानाम्, अनुसन्धानपत्रिकाणाम्, पुस्तकादीनां सुवर्गीकृतस्स्य व्यवस्थापनस्स्य,

शीघ्रतायुतायास् सुलभायास् सेवायाः, वाचनालयस्य, दैनिकसाप्ताहिकादि-पत्रिकाणाञ् च व्यवस्थायाः करणे प्रयतितव्यम् ।

९. शोधग्रन्थानां शोधपत्रिकाणां समुचितसामयिकपाठ्यग्रन्थानाञ् च प्रकाशनस्य व्यवस्था कार्या ।

१०. साधारणमाध्यमिकविद्यालयादिष्वपि उच्चकक्षापर्यन्तं यथासम्भवं संस्कृतपत्रमनिवार्यञ्च कर्तव्यम् ।

११. स्वमादर्शन् धर्मन् दर्शनं संस्कारमाचारवं विचारवं व्यवहारवं वेषम्, स्वाम् भाषाम् भूषान् नीतिं संस्कृतिम्, स्वराष्ट्रं स्वगौरवं स्वाभिमानञ् च रक्षितुमिच्छद्भिस् तेषु विषयेषु रममाणैस् संस्कृतशिक्षाविकासविस्तार-सुदृढीकरणकामैर् नेपालैर् जनैः परस्परं समागमाः, सल्लापाः, आवश्यका उपयोगिनोऽन्ये च कार्यक्रमा आयोजनीयाः ।

## ५. नेपालदेशे संस्कृतशिक्षायास् संरक्षणाय पण्डितानाम् प्रयासः

एतस्मिन् विषये २०११तमाद् वैक्रमाब्दात् प्रभृत्येव केचन वैदिक-संस्कृतिसंस्कृतास् संस्कृतानुरागिणस् स्वाभिप्रायम् प्रकटयन्तोऽभूवन् । २०२८-तमाद् वैक्रमाब्दात् प्रभृति तु केचन विद्वांसो नेपालदेशे संस्कृतशिक्षाया वैशिष्ट्यस्य पृथगस्तित्वस्य च संरक्षणाय प्रक्रोशञ्च कुर्वाणास् सन्ति । ते हि पञ्चायत्तकालरात्रिसमयेऽपि नेपालसम्प्रशासनस्य कूटप्रयोगयुक्तस्य संस्कृतमाध्यमिकशिक्षा- पाठ्यक्रमनिर्माणकार्यक्रमस्य बहिष्करणेन, सभासूपस्थितेरवसरे प्राप्ते सभायामुपस्थितौ सभानिर्णये आत्मनोऽसम्मतौ असम्मतिटिप्पणी-लेखनेऽधिकारस्य मार्गणेन[1], अपेक्षितविषयाणां सुदृढतयोपस्थापनेन, सभा-पारिश्रमिकनिरपेक्षतया व्यवहरणेन, अन्याय्यरूपेणाऽधिकृतेन व्यवहारे कृते सभायाः परित्यागेन, पाठ्यक्रमनिर्माणपारिश्रमिकपरित्यागेन, अधिकृतानाम् अन्याय्यस्याऽऽदेशस्य तिरस्कारेण, निरधिकारक-वितंसरूप-सदस्यधर्मस्याऽस्वीकारेण चेत्येवम्विधैः कार्यैः; गोष्ठ्यादीनामायोजनेन, बहूनाम् विदुषां हस्ताक्षरैस् सहितानाम् मार्गणपत्राणामधिकारिषूपस्थापनेन, दैनिकसाप्ताहिकादिपत्रिकासु एतद्विषयकाणाम् लेखानाम् प्रकाशनेन[2], संस्कृतविश्व-

---

१. ये खलु इदानीमात्मानम् लोकतन्त्रवादिनमुद्घुष्य अग्रपङ्क्तौ स्थित्वा स्वार्थं साधयन्ति, तेऽपि वैतंसिकास् सखायस् तदैतादृशस्याऽधिकारस्या-ऽन्वेषकान् नानाविधैश् छद्मपूर्णव्यवहारैरेकाकिनञ्च कृत्वाऽऽत्मानञ्च कृतार्थयन्ति स्मेति चाऽनुभूतोऽयम् विषयः ।

२. गोर्खापत्रे (२०२५।१२।३०, २०२६।६।२१, ३०३९।२।२२, २०४२।५।३, २०४३।९।१४, २०४३।११।२८), दैनिकसमाजे (२०४२।१२।२२, २०४३।३।३१) साप्ताहिकमञ्चे (२०४४।१।१, २०४४।१।२९, २०४४।४।२८, २०४४।५।४ २०४४।६।२८) गाण्डीवे (वाराणस्याम् ८१९ श२१, १९८३ फरवरि २२-२८) ।

विद्यालयपाठ्यक्रमनिर्माणकार्यबहिष्कारेण च स्वाभिप्रायम् प्रकटयन्तस् सन्ति । सर्वस्य स्वकुटुम्बस्य संस्कृतशास्त्राद्ध्ययनादौ नियोजनेनाऽप्येके नेपालदेशे संस्कृतशिक्षापरम्परायास् संरक्षणे प्राणपणेनाऽपि सर्ल्लग्नास् सन्ति । तथापि कथमपि शासनाधिकारमारूढाः पाश्चात्यशिक्षापक्षपातिनः परान्नदूषित-विचारा आकुल्या नैपाला विचारेण पाश्चात्यास् सदैव एतेषामभिप्रायाणान् तिरस्कारङ्कुर्वन्तः कूटप्रयोगपूर्ण- संस्कृतशिक्षापाठ्यक्रम- संस्कृतशिक्षण-संस्थावातावरणञ् च निर्माय नेपालदेशे संस्कृतशिक्षाया मूलस्योन्मूलने परेषाङ्कृते उपकरणीभूय प्रवर्तमानास् सन्तीति बहुभ्यो वर्षेभ्योऽनुभूयमानमस्ति । इदानीमप्येतस्मिन् विषये उल्लेखनीयम् परिवर्तनन् नाऽनुभूयते । इदानीन्तन-नैपाल- राष्ट्रिय- शिक्षाऽऽयोगेऽपि संस्कृतनिष्ठानाम् वास्तविकानां संस्कृत-प्रेमिणाम् प्रातिनिध्यन् नैव दृश्यते । संस्कृतविश्वविद्यालयोऽपि वर्तमानान् विभागानपि विभागान्तरे विलीनान् कुर्वन् आचार्यकक्षाद्ध्यापन- समय-सङ्कोचा-दिकञ् च कुर्वन् संस्कृतशिक्षायास् सङ्कोचनायैव प्रक्रमङ्कुर्वन् लक्ष्यते ।

एतस्याम् परिस्थितौ नेपालदेशे संस्कृतशिक्षा- विकास- विस्तार-सुदृढीकरणकार्याय कामपि चेष्टाङ्कर्तुम् प्रस्तूयमानः कतिपय- नैपाल-संस्कृतग्रन्थकार-परिचय-सङ्ग्रहस् संस्कृतशिक्षानुरागिणाम् वैदिकानामार्याणाम् अस्माकङ्कृते केनाऽपि रूपेणोपयोगी भवेदित्याशास्यते ।

स्वाद्ध्यायशालाकुटुम्बेन वैदिक- समाजवादि- लोकतान्त्रिक- संस्कार-प्रवर्धनसभायास् सहकारितया २०४८।५।७-८ दिनयोः उपाकर्मपर्वणः पावने प्रसङ्गे वेद- स्मृति- पुराण- रामायण- महाभारतादि-संस्कृतवाङ्मयाऽनुशीलनाय नैपाल-समाजेऽभिरुचिञ् जागरिताङ्कर्तुम् एका 'नैपालानां संस्कृतज्ज्ञानाम् मुद्रितानां संस्कृतग्रन्थानाम् प्रदर्शनी' वाल्मीकिविद्यापीठभवने काष्ठमण्डपनगरस्थे समायोजिताऽभूत् । तस्याः प्रदर्शन्या आपूर्तिमन्त्रिणा श्रीचिरञ्जीविवाग्ले-महोदयेनोद्घाटनङ्कृतमासीत् । तत्र १३४ संस्कृतग्रन्थाः प्रदर्शिता अभूवन् । तत्प्रदर्शनीप्रसङ्गेनाऽस्माभिरस्य कतिपयनैपालसंस्कृतग्रन्थकारपरिचयग्रन्थस्य रचना कृता । अत्र यथाशक्ति यथोपलब्धि नैपालानां संस्कृतग्रन्थकाराणां सङ्क्षिप्तः परिचय उपस्थापितो वर्तते । अत्र साधारणस्याऽद्ध्ययनस्य फलम् प्रस्तुतम् वर्तते, विशिष्टेनाऽद्ध्ययनेनास्य विषयस्य परिष्करणम् विस्तृती-करणञ्च यथावसरम् भविष्यति । उक्तायाः प्रदर्शन्या आयोजनाय एतस्य ग्रन्थस्य प्रकाशनाय च यैर् धनवद्भिर् मनोवद्भिश् च साहाय्यङ्कृतन् तेभ्य उदारेभ्यो महानुभावेभ्यस् साधुवादास् समर्प्यन्ते ।

स्वाद्ध्यायशालायाम् — स्वाद्ध्यायशालाकुटुम्बगृहस्थैः ।

२०४८।९।२१ इति मिते दिने ।

उपोद्घात

# संस्कृतवाङ्मयको महत्त्व

## नेपालमा संस्कृतवाङ्मयको संरक्षण-संवर्धनको प्रयास संस्कृत शिक्षाको वर्तमान शोचनीय अवस्था तथा तेस अवस्थाको निराकरणको मार्ग

## १. सम्पूर्ण मानवजातिका लागि संस्कृतवाङ्मयको महत्त्व

भूमण्डलको जुनसुकै पनि भागमा बस्ने सम्पूर्ण मानवजातिका लागि संस्कृतवाङ्मयको धेरै महत्त्व छ भन्ने कुरा सबैले बुजेकै छन्। प्राचीनकालमा संस्कृत-भाषाको प्रचारको क्षेत्र विशाल थियो भन्ने कुराको प्रमाणका लागि फ्रेञ्च, अङ्ग्रेजि, रोमन, जर्मन, रुसि, ग्रिक आदि युरोपीय भाषाहरुमा र पारसि भाषामा समेत पाइने संस्कृत-शब्दमूलक शब्दभण्डारलाइ अगाडि सार्न सकिन्छ। नेपालि, हिन्दि, मैथिलि, गुजराति, मराठि, बङ्गालि आदि भारतवर्षभित्रका आधुनिक भाषाहरुको मूल संस्कृत भाषा नै हो भन्ने कुरा त कसैबाट पनि छिपेको छैन।

संस्कृतवाङ्मयमा विद्याका विविध विधा पाइन्छन्। वार्ताविद्याका कृषिशास्त्र, पशुशास्त्र, (अश्वशास्त्र, गजशास्त्र), वाणिज्यशास्त्र, स्थापत्य-शास्त्र, मूर्तिशास्त्र, यन्त्रशास्त्र, विमानशास्त्र, शल्यतन्त्र-शालाक्यतन्त्र-कौमार-भृत्यादि-अष्टाङ्गयुक्त आयुर्वेदशास्त्र इत्यादि शास्त्रहरु, कामशास्त्र,सङ्गीतशास्त्र, चित्रशास्त्र, काव्यशास्त्र, नाट्यशास्त्र इत्यादि ललितकलाशास्त्रहरु र अरु चौसट्ठि-कला-अन्तर्गत पर्ने कलाशास्त्रहरु; काव्य-नाट्य-कथा-आख्यायिका-लक्षणादिरूपका अनेकशास्त्रहरु; त्रयी विद्याका वेदहरु, वेदाङ्गहरु (१. शिक्षा २. कल्प ३. व्याकरण ४. निरुक्त ५. छन्द ६. ज्योतिष), स्मृतिसंहिताहरु, पुराणहरु, उपपुराणहरु, इतिहास, वेदाऽविरोधि वैष्णव-शैव-शाक्त-सौर-गाण-पत्य-कौमारादि-तन्त्रहरु समेत अनेक शास्त्रहरु,दण्डनीति-विद्याका नीतिशास्त्र, प्रशासनशास्त्र (अध्यक्षप्रचार), न्यायशास्त्र (धर्मस्थीय), युद्धशास्त्र, आयुध-शास्त्र, खरपट्ट (चौर्यशास्त्र) इत्यादि शास्त्रहरु, आन्वीक्षिकीविद्याका तर्कशास्त्र, पदार्थशास्त्र, साङ्ख्यशास्त्र, योगशास्त्र इत्यादि लोकायतविचारका समेत शास्त्रहरु संस्कृतवाङ्मयमा छन्। अनेक विद्याहरुले र सिद्धान्तहरुले अनुप्राणित

काव्य–नाट्य–कथा–ऽऽख्यायिकादिरूप ललितकलाप्रधान अनेक ग्रन्थहरु संस्कृतवाङमयमा पाइन्छन्। संस्कृतवाङमयमा जस्तो प्राचीनता र अविच्छिन्नता अन्यत्र पाउन सकिन्न । मानवसभ्यताका विभिन्न पक्षहरुको इतिहासको र उपलब्धिको अनुसन्धान गर्न चाहनेहरुका लागि संस्कृतवाङमय अक्षय भण्डार छ भन्ने तथ्य सबैले स्वीकारेकै छन् ।

एसप्रकार मानवहरुका लागि सार्वजनिकनिधिका रूपमा रहेको संस्कृतवाङमय कोलाहलपूर्ण आधुनिक समाजमा नैतिकता–मानवता–र–विश्वबन्धुताको प्रसारका लागि पनि महत्वपूर्ण हुनसक्छ भन्ने कुरा संस्कृतवाङमयको उपनिषद्गीतादि–ग्रन्थहरुको अलिकति पनि परिचय पाएका मान्छेहरुबाट छिपेको छैन । रोगनिवारणका लागि, मानसिकसन्तुलन–स्थापनका लागि, मानसिकबल प्राप्त गर्नका लागि र शान्तिका लागि समेत योगशास्त्र प्रक्रियाहरुको महत्व बहुचर्चित छँदैछ । उपनिषद्हरुको अध्ययनबाट सोपन् हावर्, बर्ट्रण्ड् रसल्, टोमस् ष्टरन्ज एलिअट् इत्यादि चर्चित पाश्चात्य दार्शनिक-ग्रन्थकारहरु र कविहरु पनि गम्भीर रुपले प्रभावित भएको कुरा विज्ञहरुले जानेकै छन् । मानवजीवनको रहस्यको खोजिका लागि संस्कृतवाङमयको सर्वोपकारकता पनि विचारशीलहरुले मानेकै कुरा हो ।

तेति मात्रै हैन, भौतिकविज्ञानको अनुसन्धानका लागि प्रेरक अनेक वस्तुहरु पनि संस्कृतवाङमयमा पाइन्चन् । जगदीशचन्द्र वसु, चन्द्रशेखर वेङ्कटरमण आदि सुविख्यात भारतवर्षीय वैज्ञानिकहरुले संस्कृतवाङमयले वा तेसको एक शब्दले दिएको प्रेरणाले प्रयोगहरु गरेर नयाँ वैज्ञानिक ज्ञान पाएका हुन् भन्ने कुरा उनिहरुको जीवन – चरित्रका अभिज्ञहरु भन्दछन् । कम्प्युटर्का लागि पनि सर्वाधिक उपयुक्त भाषा संस्कृत नै हुन सक्च भन्ने विचार पनि चर्चामा आइसकेको छ । एसबाट संस्कृतभाषाको स्वरूप पनि व्यवस्थित र वैज्ञानिक छ भन्ने बुजिन्च ।

## वैदिक आर्यहरुका लागि र सबै भारतवर्षनिवासिहरुका लागि संस्कृतवाङ्मयको विशिष्ट महत्व

'हिन्दुधर्म' वैदिक सनातनवर्णाश्रमधर्मको नै आधुनिक लौकिक व्यावहारिक नाम हो । ऋग्वेदप्रतिपादित–सिन्धुसभ्यताका पालक वैदिक आर्यहरु नै लोकमा हिन्दु भनिन्छन् । अतः हिन्दुहरुका लागि वेदवेदाङ्गस्मृति–पुराणादिसंस्कृतवाङमयको महत्व वर्णनातीत छ । हिन्दुहरुसित वेदवेदाङगादि संस्कृतवाङमयको सम्बन्ध सर्वथा विच्छिन्न गरियो भने हिन्दुहरुको हिन्दुत्व नै नष्ट हुन्छ । हिन्दुहरुको जन्मदेखि मरणसम्मका सबै धार्मिकक्रियाकलाप वेदवेदाङ्गादि संस्कृतवाङमयकै आधारमा संस्कृतभाषाकै प्रयोग गरेर गरिन्चन् । हिन्दुराष्ट्र-

धर्मको स्रोत वेदबाट नै बहन्छ। हिन्दुनैतिकता संस्कृतवाङ्मयबाटै थाहा हुन्छ। हिन्दुजीवनपद्धति वेदवेदाङ्गहरुबाटै निर्दिष्ट छ। हिन्दुहरुको विशिष्ट शिक्षापद्धतिको परम्परालाइ स्थिर राखि हिन्दुराष्ट्रियतालाइ बलियो बनाउन र हिन्दुहरुको गौरव बडाउनका लागि पनि संस्कृतविद्यापरम्पराको विशिष्ट भूमिका हुन्छ। तेस कारण हिन्दुहरुका लागि संस्कृतवाङ्मयको विशिष्ट महत्त्व स्पष्ट रूपमा देखिन्छ। हिन्दुहरुको मूल थलो भारतवर्षका प्रदेशहरुमा हिन्दुप्राय जनसमुदायहरुमा वर्तमान अहिन्दुहरुका लागि पनि हिन्दुहरुका बिचमा समन्वयपूर्ण र शान्तिपूर्ण जीवनयात्त्रा सञ्चालनगर्नका निमित्त आवश्यक उपयोगि ज्ञान दिने वाङ्मयका दृष्टिले पनि संस्कृतवाङ्मयको महत्त्व प्रचुर मात्त्रामा छ।

## नेपालिहरुका लागि संस्कृतवाङ्मयको विशेष महत्त्व

भूमण्डलमा नेपाल एकमात्त्र हिन्दुराज्ज्य भनिन्छ। अतः याँहाँका बासिन्दाका लागि संस्कृतवाङ्मयको महत्त्व धेरै छ। नेपालिहरुको राष्ट्रिय एकताको एक प्रबल सूत्रको रूपमा रहेको नेपालि भाषा संस्कृतमूलक भाषा हो। अतः नेपालि भाषामा अभिव्यक्तिक्षमता र सौन्दर्य बडाउनका लागि समेत पदेपदे संस्कृतभाषाका शब्दहरु प्रयोगगरिन्छन्। नेपाल देशको धर्म–संस्कृति–प्रशासन- र- कलासित सम्बद्ध इतिहासादिको महत्त्वपूर्ण अंश संस्कृतवाङ्मयमा सुरक्षित छ। नेपालिजनतामद्ध्ये धेरैजसोमा धर्मभावनाको, सांस्कृतिक जागरणको नैतिकताको, कलात्मक अनुभूति समेतको सम्पादनमा र चरित्त्रबल बडाउनमा पनि संस्कृतवाङ्मयको भूमिका ठुलो छ। नेपालमा भौतिक विकासको मूल आधारका रूपमा रहन सक्ने वास्तविक हिन्दु राष्ट्रनीतिको विकासका लागि संस्कृतवाङ्मयको नितान्त आवश्यकता छ। दैनन्दिनजीवनयात्त्राका लागि पनि बहुसङ्ख्यक नेपालिहरु संस्कृतवाङ्मयमा रहेको ज्ञानको अपेक्षा राख्दछन्। हामि हिन्दुहरुको मुख्ख्य परम्पराको राम्ररो परिचय प्रदान गर्न समर्थ वेद-स्मृति–पुराणहरुको व्याख्ख्या गर्ने विद्द्वान्हरुको; धार्मिककृत्यव्यवस्थापनमा सहयोगि हुने धर्ममीमांसकहरुको, धार्मिककृत्यापेक्षितकालनिर्णयसहयोगि ज्योतिषिहरुको; वेदस्मृतिपुराणादि–प्रतिपादित–धार्मिककृत्य–पद्धतिहरुका ज्ञाता र प्रयोक्ता पण्डितहरुको; वैदिक–दर्शनको व्याख्ख्या गर्ने विद्द्वान्हरुको; वैदिक दर्शनको तर्कले संरक्षण र पोषण गर्न सक्ने तार्किकहरुको; आयुर्वेद जान्ने कुशल चिकित्सकहरुको; सङ्ग्रहालयादिमा रहेका शिल्पकला-स्थापत्यकला–आयुर्वेदविज्ञानादिविषयहरुको र अरु अनेक महत्त्वपूर्णग्रन्थहरुको अनुसन्धान गरेर त्याँहाँ भएका नयाँ व्यावहारिक र शास्त्रीय विषयहरुको प्रतिपादन–प्रकाशनमा समर्थ अद्ध्येताहरुको; उक्त सबै विद्द्याहरुको परम्पराको संरक्षणमा समर्थ विशिष्ट शिक्षकहरुको,

तथा औपनिवेशिक विदेशि विधर्मि शासकका कार्यकर्ता जस्ता वैदिकधर्मसंस्कृति-परम्पराऽऽचारविचारशून्य संस्कृतवाङमयपरिचयरहित कथित समाजसेवक कथित राष्ट्रसेवकहरुका स्थानमा साधारण शिक्षा पाएका मान्छेले गर्न सक्नि समाज-सेवाका र राष्ट्रसेवाका विविध कार्य गर्न समर्थ, आफ्नो धर्मसंस्कृतिपरम्परा-आचारविचारहरुमा आदर गर्ने, संस्कृतवाङमयपरिचययुक्त, संस्कृतमूलक-साधारण-शिक्षा पाएका समाजसेवकहरुको, राष्ट्रसेवकहरुको र राष्ट्रनीतिसम्बद्ध काम गर्ने राष्ट्रनेताहरुको पनि भूमण्डलको अद्वितीय हिन्दुराष्ट्र भनिने नेपाल-राष्ट्रमा परमावश्यकता छ। एसबाट नेपालिहरुका लागि संस्कृतवाङमयको अत्यन्तै महत्त्व र आवश्यकता छ भन्ने कुरा स्पष्ट हुन्छ।

ऐले नेपालि राष्ट्रियताका विषयमा विचार गर्दा अधोनिर्दिष्ट तथ्य देखा पर्दछ। नेपालि राष्ट्रका लागि आवश्यक तत्त्वहरुमद्ध्ये वर्तमान नेपालको निश्चित भूभाग, कामचलाउ रूपमा रएको साझा नेपालि भासा; नेपालदेशमा बसोबास गर्ने बाउन, छेत्रि, नेवार, मगर, गुरुम्, राइ, लिम्बु, सेर्पा, तमाङ, थकालि, भोटे, सार्कि, कामि, दमै, गाइने, माझि, दनुवार, सुनुवार, दरै,कुमाल, कायस्थ, कुर्मि, केवट, धानुक, थारु, कोचे, मेचे, सतार, धिमाल, धाङड, दुसाद डोम, मुसलमान, क्रिस्तान इत्यादि विभिन्न जातजाति-भाषाभाषि-धर्मानुयायि-हरुको परस्परमा परिचय, हेलमेल, परम्परागत विशिष्ट प्रकारको सहअस्तित्व र मिलिजुलि एउटा राष्ट्रका रूपमा रहि व्यक्तिगत,सामाजिक र राष्ट्रिय रूपमा जीवन-यात्रा चलाउने इच्छा नै प्रमुख पुँजिका रूपमा रएका देखिन्छन्। इनै पुँजिको बुद्धिमत्तापूर्वक परिचालन गरि नेपालि राष्ट्रलाइ भारतवर्षीय उपमहाद्वीपमा स्वतन्त्र, सुसमन्वित, सुविकसित, समृद्ध, शान्तिपूर्ण र सुखि रूपमा उब्स्याउन र अनन्त कालपर्यन्त जीवन्त राख्न विचारपूर्वक काम गर्न पर्ने देखिन्छ। एस्तो नेपालि राष्ट्रियताका दृष्टिले पनि नेपालमा संस्कृतशिक्षाको विकास विस्तार र सुदृढीकरण उचित, आवश्यक र लाभदायक देखिन्छ।

## २.नेपालमा सस्कृत-वाङ्मय-संरक्षण-संवर्धन-प्रयास

भूमण्डलको जम्बूद्वीपान्तर्गत भारतवर्षमा हिमालयका मद्ध्यभागका दक्षिणपार्श्वमा नेपाल देश रहेको छ। यो देश अनादिकालदेखि नै वैदिक आर्य-हरुको पुण्यभूमिका रूपमा रहेको कुरा वेदमा, स्मृतिपुराणहरुमा, रामायण-महाभारतमा र रघुवंश-कुमारसम्भवादिकाव्यमा समेत पर्वतराज हिमालयको महिमा गाइएकाले ज्ञात हुन्छ। शान्तिप्रिय ऋषिहरु जनसम्मर्द नभएका तथा कोलाहल-शून्य हिमालयका प्रत्यन्तपर्वतका उपत्यका-अधित्यकाहरुमा आश्रम-संस्थापन गरेर विद्याको साधना गर्दथे। देउपाटःदेशादिस्थानमा वसिष्ठादि ऋषिका आश्रम

रएका थिए भन्ने कुरा ऐतिह्यविद्हरु भन्दछन् ।

भारतवर्षमा यवन–शक–हूण–मुसलमान–मुगलहरुका आक्रमण भएपछि त वेद–स्मृति–पुराणादि–विद्याको र वर्णाश्रमधर्मको अनुपालन विशेष रूपमा नेपालमा नै भएको कुरा पनि इतिहासज्ञहरुबाट छिपेको छैन ।

रामायणको र महाभारतको पनि प्राचीनतम हस्तलिखित पुस्तक नेपालमा नै सुरक्षित रएको पाइन्छ । शाक्ततन्त्रका र बौद्धतन्त्रका पनि धेरै ग्रन्थहरुका प्राचीनतम हस्तलिखित पुस्तकहरु नेपालका पुस्तकालयमा नै सुरक्षित रएका देखिन्छन् । अश्वघोषको सौन्दरनन्द, सागरनन्दिको नाटकलक्षण-रत्नकोष, शुभङ्करको हस्तमुक्तावली इत्यादि अनेक ग्रन्थ अन्यत्र लुप्त भएका र नेपालमा नै प्राप्त गरि प्रकाशकहरुले प्रकाशित गरेको कुरा पनि विद्वान्हरु-लाइ अवगत भएकै विषय हो । अन्यत्र दुर्लभ भएपनि निष्पन्नयोगावली आदि ग्रन्थका हस्तलिखित पुस्तकहरु नेपालका पुस्तकालयहरुमा सुलभ भएका कुरा-हरुबाट समेत प्रभावित भै हरप्रसाद शास्त्रिका सुपुत्र विनयतोष भट्टाचार्यले 'नेपाल अद्ध्येताहरुका लागि स्वर्ग हो' भनेर भनेको कुरा पनि नेपालविद्या-विद्हरुले सुनेकै छन् ।

नेपालमा लिच्छवि–सम्प्रशासनकालमा संस्कृतभाषानिबद्ध विद्याको प्रचार र स्वधर्मरक्षाको प्रयास पनि प्रशंसनीय थियो भन्ने कुरा तेस समयका प्रथममानदेव–अनुपरमगुप्त–द्वितीयजयदेव–बुद्धकीर्ति–प्रभृतिका प्रौढ र प्राञ्जल शिलालेखहरुबाट स्पष्ट बुजिन्छ ।

कर्णाली–प्रदेशमा र गण्डकी–प्रदेशमा पनि संस्कृतभाषानिबद्ध विद्या-को र स्वधर्मरक्षाको प्रयास उल्लेखनीय रूपमा हुँदै आएको कुरा पनि सुवर्णपत्र-ताम्रपत्र–शिलापट्ट-आदिमा उट्टङ्कित शासन–लेखहरुबाट बुजिन्छ । मल्लहरु-का शासनक्षेत्रमा र समयमा पनि निगमाऽऽगमविद्याहरुको अनुशीलन-अनु-पालन र संस्कृतग्रन्थप्रणयन–कार्य उल्लेखनीय रूपमा भएको देखिन्छ ।

आजसम्म पनि नेपालमा अविच्छिन्न रूपमा चल्दै रहेको संस्कृत–ग्रन्थ–प्रणयनको परम्पराले नेपालि जनताको संस्कृतभाषानिबद्ध विद्याहरुमा र संस्कृतभाषामा गैरो अनुराग रएको कुरालाइ स्पष्ट गर्दछ ।

वैदिक–सनातन–वर्णाश्रमधर्मका अनुयायि हामिहरुका राष्ट्र–समाज–कुटुम्ब–व्यक्तिका प्रकृति–सम्बन्धि विचारका अजस्र स्रोतका रूपमा रहेको संस्कृतशिक्षा पनि अनादिकालदेखि नै नेपालमा परम्परामा धर्मका अङ्गका रूपमा पण्डित– ब्राह्मणहरुले स्वतन्त्ररूपमा र धनि–वलि–कुटुम्बिहरुले पनि पण्डित-ब्राह्मणहरुद्वारा चलाइँदै गरेको बुजिन्छ । एस्तै प्रणालिद्वारा संस्कृतशिक्षा पाएका

मानिसहरु उइलेइ ठुला विद्वान् र ग्रन्थकार समेत भएको देखिञ्च। अर्वाचीन कालमा नेपालमा उल्लेखनीय ठुलो राष्ट्रिय प्रयास केइ नभएको हुँदा विद्यामा धेरैं प्रगति भएको त देखिन्थेन, तथापि संस्कृतभाषानिबद्ध विद्याद्वारा राष्ट्रिय-चरित्रको साधारणतया संरक्षण भने गरिइरएकै थियो। यमलपर्वत-मण्डलाऽधिपति वत्सराजले सोरौँ शताब्दीका प्रारम्भमा नएँ विद्याकेन्द्रहरुको स्थापना गरेका थिए भन्ने कुरा तथा कास्किका राजा सिद्धिनारायण साहले जगन्नाथ, मणिभद्र,कुलराज, हर्षदेव इत्यादि पण्डितहरुलाइ राखेर छात्रावास,पुस्तकालय इत्यादि सुविधाको व्यवस्था समेत गरेर भूमिदानद्वारा विद्यालय-सञ्चालन गरेका थिए भन्ने कुरा गोपीनाथशर्माको 'नेपालमा शिक्षाको इतिहास' भन्ने ग्रन्थबाट देखिञ्छ।

## ३. ऐले नेपालमा संस्कृतशिक्षाको शोचनीय अवस्था

नेपालमा उपर्युक्त प्रकारको परम्परा रैआएकामा जङ्गबाहादुरले १९०८ संवत्मा (?) विद्यालयमा चलाइने अङरेजि शिक्षाको बीजारोपण गरेपछि विस्तारै संस्कृतशिक्षा पनि विद्यालयमा चलाइने रूपमा परिणत भएच। सबैभन्दापैला एस्तो संस्कृतविद्यालय जङ्गबाहादुरका छोरा जनरलजितजङले पण्डित विष्णुहरि रिमाललाइ नियुक्त गरेर काठमाण्डुको पशुपति-देवपत्तनमा राजराजेश्वरीघाटमा स्थापित गरेका थिए भन्ने कुरा सोमनाथ सिग्देलले'नेपालमा शिक्षा' भन्ने ग्रन्थको नेपालि संस्करणमा भनेका छन्। अरुहरुले भने एस सम्बन्धमा आर्कै किसिमको कुरा देखाएका छन्। १९२५ वैक्रमाब्दमा नीलदेव पण्डित र वाचस्पति पण्डित नेपालको सम्प्रशासनले दिएको वेतन खाएर नेपालको सम्प्रशासनले नै दिएको वृत्ति खाने विद्यार्थिहरुलाइ पडाउँथे भन्ने कुरा प्रज्ञाको त्रिपन्नौँ अङ्कमा प्रकाशित शरच्चन्द्र भट्टराइको लेखबाट प्रकाशमा आएको छ। एस प्रकारसित विद्यालयहरुमा वेतनभोगि पण्डितहरुले संस्कृत -शिक्षा दिन थालेपछि तेसका प्रभावले घर-घरमा स्वतन्त्ररूपमा निर्वेतनरूपमा र निश्शुल्क-रूपमा सञ्चालित हुँदै गरेको संस्कृतशिक्षा शिथिल हुन थालेच।

जब क्रिश्चियन-धर्म-प्रचारक- विद्यालयहरु सञ्चालित गरेर नेपालको शासनतन्त्रका र अर्थतन्त्रका प्रभावशालि व्यक्तिहरुका सन्तानलाइ भर्ना गरि पडाइ तिनका मस्तिष्कमा आफ्नु सनातन-हिन्दु-धर्म-संस्कृति-परम्परा प्रति घृणा वा अनादर वा उपेक्षाभाव उत्पन्न गराउन पाश्चात्य (पश्चिमा) मानिस-हरुलाइ नेपालका सम्प्रशासकहरुले अनुमति दिए, नेपालको सार्वभौमसत्ता-(स्वायत्तताशक्ति)का निधानका रूपमा र नेपालको संविधानको स्रोतका रूपमा उब्बिनेवाला व्यक्तिले पनि क्रिश्चियन मिसनरि-स्कुलबाट शिक्षा लिन थाले,तेस

बल्कि त परम्परागत संस्कृतशिक्षामा जनताको आदरभाव पनि शिथिल हुन थालेको देखियो ।

२०११वैक्रमाब्दमा नेपालि हिन्दुजनताका ससाना धार्मिककेन्द्रका रूपमा रएका दुर्गाकवच-वेद-रुद्री-चण्डीहरु, अग्निस्स्थापना, श्राद्धपद्धति आदि कर्मकाण्ड, शीघ्र-बोध-मुहूर्तमार्तण्ड-भास्वती-आदि ज्योतिषग्रन्थ, चाणक्यनीतिदर्पण-हितोपदेश-पञ्च-तन्त्रादि नीतिशास्त्रग्रन्थ तथा अमरकोश-लघुकौमुदी-रघुवंशादिग्रन्थको पठन-पाठन हुने २३३ भाषापाठशालाहरु सातसमुद्रपारका सल्लाहकारका सल्लाहका र तिनै-का आशामुखिहरुले गरेका सिफारिसका भरमा रूपान्तरित गरेर तिनमा उपर्युक्त ग्रन्थहरुको पठनपाठन प्रतिबन्धित गरियो । तेसलाइ राजा त्रिभुवनले र महेन्द्रले अनुमोदनगरे । एसरि नेपालमा संस्कृतशिक्षाको फेदैमा प्रहार गर्न थालियो । संस्कृतका उच्चशिक्षाको पनि रूपान्तरण गर्न तेस बेलाका पाश्चात्यानुग्रहापेक्षि-हरुले चाहेका थिए । तर तेस बेला संस्कृतको उच्चशिक्षा वाराणसेय-राजकीय-संस्कृत-महाविद्यालयसित सम्बद्ध भएकाले र अन्य कारणहरुले गर्दा तेस बेला तिनिहरुले तेसोगर्न सकेनन् ।

तर जब २०२८सालमा राष्ट्रिय भनिएको अराष्ट्रिय नएँ शिक्षायोजना-लाइ वरिष्ठ विद्वान्हरुको असम्मति र विरोध हुँदाहुँदै पनि नेपालको सम्त्रशासनले लागुगर्‍यो; दैलादैलामा अङ्ग्रेजि-शिक्षापद्धति-अन्तर्गतका विद्या-लयहरु खोलेर संस्कृत शिक्षापद्धति-अन्तर्गतका विद्यालयहरुको उन्मूलन गर्‍यो; छैंटो र सातौं कक्षामा चलिरहेको विशिष्ट–संस्कृत-शिक्षणमा रोक लगाएर, संस्कृत–शिक्षण-संस्थाहरुको सङ्ख्या घटाएर, संस्कृत-शिक्षण-संस्थाहरुको सम्पत्तिमा लुछाचुँडि गराएर, साधारण माध्यमिक विद्यालयका छैंटो र सातौं कक्षामा रात्तैमा उपेक्षणीय रूपमा राखिएको संस्कृत विषयको पनि विद्यालयहरुमा पठनपाठनको दृढ र राम्रो व्यवस्था नगरेर, आठौं – नवौं-र- दशौं कक्षाहरुमा रहेको अनिवार्य संस्कृतपत्र पाठ्यक्रमबाट हटाएर र इ सबै उपायहरुको प्रयोग गरेर ग्रामीण जनताका लागि संस्कृतशिक्षा टाढाको, दुर्लभ र अपरिचित वस्तु बनाइयो; षड्यन्त्रपूर्ण रूपमा संस्कृत - माध्यमिक - शिक्षाको पाठ्यक्रम बनाएर मानिसहरुको प्रवृत्तिमा आउलो हालियो र जन-अभिरुचिमा तुषारापात गरियो; वाराणसेय-संस्कृत-विश्वविद्यालयको पाठ्यक्रमसँग निरपेक्ष गराउनुका साथै आफ्नु वैशिष्ट्यको रक्षाका लागि पनि अनुपयोगि हुने गरि संस्कृतको संरक्षण गर्ने छलले संस्कृत शिक्षाको वैशिष्ट्य नष्ट गर्नका लागि स्वधर्मनिष्ठा – दूरदर्शिता-उत्साह–शून्य आशापाशबद्ध प्रमाणपत्रे मानिसहरुद्वारा षड्यन्त्रपूर्ण रूपमा संस्कृतको उच्चशिक्षाकोपाठ्यक्रमयोजना बनाइयो; आचार्यसम्मचलेको आयुर्वेद-

शिक्षालाइ मद्ध्यमासम्म मात्त्र सीमित गरियो[1], संस्कृतशिक्षाप्रेमिहरुमा 'चण्डालचौकडि' भनेर प्रसिद्ध मान्छे र तिनैका पिछलग्गुहरुलाइ मात्त्र संस्कृतशिक्षाको सञ्चालनमा नेतृत्वका स्थानमा राख्ने परम्पराको स्थापना गरियो; संस्कृतशिक्षाको संरक्षणका लागि राष्ट्रले गरेको आर्थिक लगानिको पनि धनि-बलि-शोषक-सामन्तका र तिनका परिधिका व्यक्तिको नेतृत्व र स्वार्थ संरक्षणगर्ने दृष्टिले मात्त्र परिचालन हुने, संस्कृतशिक्षाको र संस्कृतवाङमयको श्रीवृद्धि गर्ने काममा उक्त लगानिको कुनै उल्लेख्य उपयोग हुन नपाउने स्थिति बनाइयो; तब त पैलेइ नै फेदमै प्रहारगरिएको संस्कृतशिक्षावृक्ष राजा वीरेन्द्रका शासनकालमा जरै उखेलिएर सर्वथा शुष्क र निर्जीव हुन पुग्यो। संस्कृतका मा.वि. हरुका विद्यापीठहरुका र विद्यार्थिका सङख्या केइ देखिए पनि स्व-विद्या-धर्म-निष्ठाका दृष्टिले ति सर्वथा अकिञ्चित्कर हुन गएका देखिए। वर्णमालाको पनि यथार्थ ज्ञान नभएका मान्छे वैयाकरण - कोषकार - प्राज्ञशिरोमणि समेत बनाइने कुरा साधारणजस्तो हुन गयो।

२०२६ सालमा निस्किएर २०२८ सालमा हराएको संस्कृतविश्वविद्यालयस्थापनाको कुरा २०३९ सालमा षड्यन्त्रकारिरूपमा उठ्यो। २०३९ भाद्र १ गते गठित भै २०४० श्रावण ८ गते आफ्नो प्रतिवेदन प्रस्तुत गर्ने साहि-उच्च-शिक्षा–आयोगले नेपालमा संस्कृत–शिक्षाको विकास विस्तार र सुदृढीकरणका लागि हैन,हिन्दुराज्ज्य भनिएको नेपालको सम्प्रशासनको मुकुण्डोकारूपमा र पाश्चात्त्यका अनुसन्धान-सम्बन्धि तालिम दिने सँस्थाका नक्कलका रूपमा मात्त्र रहने गरि नेपालमा संस्कृत-विश्व-विद्यालयको स्थापना गर्ने बाटो बनायो। तथापि २०४१ सालमा संस्कृत- विश्वविद्यालयको शैक्षिक, प्रशासनिक र आर्थिक व्यवस्थाका विषयमा विस्तृत योजना तयार गर्न संस्कृतज्ञहरुको जुन संस्कृत-विश्वविद्यालय-तयारि-समिति नेपाल-सम्प्रशासनले बनायो, तेस समितिले त साहि-उच्चशिक्षाआयोगको धारणालाइ अस्वीकारगरि नेपालमा संस्कृतशिक्षाको विकास विस्तार र सुदृढीकरण गर्न संस्कृत-विश्वविद्यालयको शिक्षणव्यवस्था -

---

१. नेपालमा संस्कृतभाषानिबद्ध विभिन्न आर्षशास्त्रहरुको अध्ययन - अध्यापनमा शिथिलता ल्याउन पश्चिमबाट चलाएको चालबाजिको तिरस्कार गर्दै बेला-बेलामा पत्त्रिकाहरुमा लेख छपाइ ति शास्त्रहरुको पठनपाठनपरम्पराको संरक्षण गर्न तिर सबैको ध्यानाकर्षण गर्ने प्रयास गर्दै आइएको हो। आयुर्वेद-शिक्षाका विषयमा पनि 'आयुर्वेदलाइ कसरि लोकप्रिय बनाउने' भन्ने लेख (गो. प. २०२६।६।२१) र 'आयुर्वेदको प्रगति कसरि?' भन्ने लेख (विश्वा-स्मदर्शन २०२९ चैत्र) प्रकाशितगराइ विचारहरु जनसमक्ष राखिएका हुन्।

प्रशासनव्यवस्था - र - अर्थव्यवस्थाको योजना प्रस्तुत गरेको थियो। तर तेस योजनालाइ नेपालको सम्प्रशासनले रद्दिको टोकरिमा फ्यांकिदियो।

२०४३ सालमा नेपालको सम्प्रशासनले 'संस्कृत-बिश्वविद्यालय स्थापित गरियो' भनेर घोषणा गऱ्यो। तर यो विश्वविद्यालय साहि-उच्चशिक्षा-आयोगले परिकल्पना गरेजस्तो नाममात्रको विश्वविद्यालयको रूपमा रएको छ। एस विश्वविद्यालयको शैक्षिककार्यक्रम सर्वथा निष्प्राण र नेपालमा संस्कृतशिक्षाको विकास बिस्तार र सुदृढीकरण गर्ने दिशामा सिन्को पनि नसार्ने खालको भएको देखिन्छ [२]।

ऐले नेपालमा चलेको संस्कृतशिक्षाको पाठ्यक्रमले अङरेजि भाषाको अनिवार्यताले गर्दा विशेष गरि धार्मिक दृष्टिले संस्कृत शिक्षा लिन चाआने मान्छेलाइ र धार्मिक दृष्टिले संस्कृत-बिद्यालय सञ्चालनगर्न चाआने मान्छेलाइ बाधा पारेको देखिन्छ। यो पाट्ठ्यक्रम नीतिशास्त्र जस्तो विषयको समावेश नभएको हुनाले र तल्ला तहमा नै शास्त्रीयताको गरुङ्गो भारले लादिएको हुनाले (क) साधारण शिक्षार्थिका लागि (ख) सबै जातिका छात्रका लागि र (ग) महिलाहरुका लागि पनि प्रतिकूल देखिन्छ। वार्ता त्रयी दण्डनीति र आन्विक्षिकी इ सबै विद्याहरुको न्यूनतम प्रतिनिधित्व पनि नभएको हुनाले सैद्धान्तिक रूपमा त्रुटिपूर्ण र विकलाङ्ग (अपाङ्ग) पनि भएको छ [३]।

---

२. (क) २०४३ सवत्मा स्थापित संस्कृत-बिश्वविद्यालयको ऐनमा रएका त्रुटिहरुको र छात्रस्रोतका समस्याहरुको निराकरणका सम्बन्धमा शासनतन्त्रले संस्कृतशिक्षाको पाठ्यक्रमको निर्धारणमा र पाठ्यपुस्तक लेखाउनमा गरेका उपेक्षापूर्ण वा षड्यन्त्रपूर्ण कामका विषयमा समेत वस्तुस्थिति जनसमक्ष राख्न गो.प.मा २०४३।११।४ मा 'संस्कृत-विश्वविद्यालय : छात्रस्रोतको व्यवस्था' भन्ने लेख र २०४३।११।२८ मा 'सत्य कुरामा विवेकदृष्टि रहोस्' भन्ने सम्पादकलाइ चिठि प्रकाशित गरिएका थिए। (ख) संस्कृत-विश्वविद्यालय खुलेपछि पनि नेपालमा संस्कृतशिक्षाको विकास बिस्तार र सुदृढीकरण हुने लक्षण नदेखिएको र तेसका प्रतिकूल लक्षणहरु देखिएका हुनाले राष्ट्रका अभिभावक-र-उदबुद्धजानपद (नागरिक)हरुको ध्यान आकृष्ट गर्न २०४४।६।२८ को साप्ताहिक मञ्चमा आवश्यक-विवरण-युक्त 'नेपालमा संस्कृत-शिक्षाको विकास बिस्तार र सुदृढीकरण हुने आशा अत्यन्तै क्षीनो' भन्ने लेख प्रकाशित गराइएको थियो।

३. संस्कृतशिक्षालाइ पुजाकोठाका विषयमा सीमित गरेर वा आधुनिक विषयको

## ३७. नवमीसिंहो भण्डेलः (राजभण्डारी)

नैपाल–कान्तिपुरराज-भूपालेन्द्रमल्ल–शासनकाले (१७४४–१७५७वै.) कान्तिपुरे वर्तमानः शिवकृष्ण–पौत्रो मानसिंहपुत्त्रस् सुमङ्गलाकुक्षिजो नवमीसिंहो भण्डेलः खलु तन्त्रचिन्तामणिः, पुष्परत्नाकरः, चण्डीभक्तिविनोदिनी, कुलमुक्तिकल्लोलिनी इति शाक्ततन्त्राचारसम्बद्धान् ग्रन्थान् रचयामास किल। तेषु ग्रन्थेषु मध्ये चण्डीभक्तिविनोदिनी तद्वंशधरैर् मुद्रापयित्वा प्रकाशितोपलभ्यते। पुष्परत्नाकरोऽपीदानीम् मुद्रितोऽस्ति। अन्यौ ग्रन्थौ नैपालराष्ट्रियाभिलेखालये सङ्गृहीतौ दृश्येते। पञ्जीसङ्ख्या –प्र. ८, ८७६; द्वि. ३७५; प्र. १८२।

## ३८. राजा भूपतीन्द्रमल्लः (१७५३–१७७९ वै.)

नैपाल-भक्तपुरराजो भूपतीन्द्रमल्लः खलु देवप्रतिष्ठानित्यपूजाविद्ध्यादिकान् ग्रन्थान् प्रणिनाय किल। एतेन लोकभाषया रचितस्य महाभारतनाटकस्य १७५९ तमे वैक्रमेऽब्दे लिखितम् पुस्तकम्, विद्याविलापनाटकस्य १७७७ तमे वैक्रमेऽब्दे लिखितम् पुस्तकञ् च नैपालराष्ट्रियाभिलेखालये सङ्गृहीतन् दृश्यते (पञ्जीसङ्ख्या–प्र.२६२; च. ६३६)। मुद्रितम् चैतन् नाटकद्वयमिति सूर्यविक्रमो वदति (ने. उ. म. इ. पृ. सङ. २३४)। माधवाऽनलनाटकम्, रुक्मिणीपरिणयनाटकञ् चेति अन्यदपि रूपकद्वयम् भूपतीन्द्रमल्लेन कृतम् प्रबोधचन्द्रेणोल्लिखितमस्तीति च स एवाऽऽह। अन्यान्यपि उषाहरणनाटकादीनि बहूनि रूपकाणि भूपतीन्द्रमल्लेन कृतानीति वदन्ति। किन्तु तत्समाननामकानि बहूनि रूपकाणि रणजिन्मल्लेन कृतानीत्यप्युल्लेखञ् कुर्वते। एतानि लोकभाषागीतिमयानि नाट्यानि भासकालिदासादिरचित-स्वप्नवासवदत्ताऽभिज्ञानशाकुन्तलादिरूपकसदृशानि रूपकाणि तु न सन्तीति नैपाल–संस्कृतग्रन्थकार–परिचयप्रदाने तेषामुल्लेखोऽकर्तुं शक्यः प्रतीयते।

## ३९. गोपालः (१७८३ वै.)

बलिसुतोऽयङ् गोपालः करटिकौतुकङ् करिकौतुकं वा नाम गजशास्त्र-ग्रन्थं रचयामास किल। तेन स्वग्रन्थसमाप्तावेवमुल्लेखः कृतो दृश्यते–"**अब्दे नागयुगाङ्गशीतकिरणे तत्र तिथौ पक्षतौ, कृष्णायामिनवासरे मृगशिरस्-साध्योल्लसन्कौलवे। सम्पूर्णङ् कृतवानयङ् गजहितायाऽऽज्ञामवाप्याऽवनीपालादेः करिकौतुकम् बलिसुतो गोपालनामाऽवनौ ॥ न स्थायि**

चञ्चलवं वर्म तनुजानामिह विक्षतौ । चिरस्स्थाय्यक्षरम् ज्ञात्वाऽकरोत् करटिकौतुकम्।। निन्दन्तु दुर्जनास् सर्वे स्तुतिम् कुर्वन्तु सज्जनाः। सममेवाञ्जलिन् तेभ्यो बद्ध्वाऽकारि द्विपाक्षरम्" इति । अनेनोल्लिखितोऽब्दश् शकान्ताब्द इत्यवगम्यत इत्यनेन १७८३ तमे वैक्रमेऽब्देऽयम् ग्रन्थः पूर्णः कृतो मन्तव्यः ।

## ४०. घनश्यामः

जगज्ज्योतिर्मल्लदौहित्रानन्तसिंह–नियोगि–घनश्याम–कृता हस्तमुक्तावलीसारसमुद्धृतिकाख्या हस्तमुक्तावली–टीका नेपाल राष्ट्रियाभिलेखालयेन मुद्रापितास्ति ।

## ४१. *राजा जगज्जयमल्लः (शा.का. १७७६–१७९१)

नेपाल–कान्तिपुरराजो जगज्जयमल्लः पुराणमेव प्रबोधचन्द्रोदयनाटकमभिनयाय सङ्क्षिप्तम् प्रतिसंस्कृतम् च कृत्वा अभिनवप्रबोधचन्द्रोदयम् नाटकम् चकार किल । पशुपतिभट्टारकयात्राप्रसङ्गेन समवेतानान् दिगन्तवासिनाम् वेदान्तिनान् तपस्विनाम् च विबुधानां समाजेऽभिनयार्थैवेदं संस्कृतनाटकं रचितमिति तदीयसूत्रधारवाक्यादवगम्यते। एतस्य नाटकस्य हस्तलिखितम् पुस्तकम् नेपालराष्ट्रियाभिलेखालये सङ्गृहीतम् दृश्यते । पञ्जीसङ्ख्या प्र. ११५४।

## ४२. राजा रणजिन्मल्लः (शा.का.१७७६–१८२६ वै )

नेपाल–भक्तपुरराजो रणजिन्मल्लो ग्रहगणितविषयाम् गणितमञ्जरीम्, सङ्गीतशास्त्रविषयं सङ्गीतचूडामणिम् च प्रणिनाय किल । २०२० तमे वैक्रमेऽब्दे मुद्रिते सङ्क्षिप्ते सूचीपत्रे गणितमञ्जर्या उल्लेखो नोपलभ्यते, तथापि देवीप्रसादलम्सालसम्पादिते ज्योतिषविषयक–बृहत्सूचीपत्रे तूल्लेखः प्राप्यते । एतेन ग्रन्थेन ग्रहगणितज्ञानविषये कियत् सौविद्ध्यम् वर्धितमिति तदभिज्ञा एव निरूपयितुम् प्रभवन्ति । सङ्गीतचूडामणिस् तु उक्ते सङ्क्षिप्ते सूचीपत्रेऽपि उल्लिखितोऽस्ति । पञ्जीसङ्ख्या–प्र. ३६६–२ । एतस्य ग्रन्थस्योपयोगिताविशेषम् च सङ्गीतज्ञा एव निर्धारयितु शक्नुवन्ति । रणजिन्मल्लेन रचितेषु रूपकेषु रामचरित्रम्, माधवानलकामकन्दला च मुद्रिते अपि स्त इति सूर्यविक्रमो वदति (ने. उ. म. इ., पृ. २२५) । रणजिता रचितानि उषाहरणनाटकम्, अन्धकासुरवधोपाख्याननाटकम्, कृष्ण-

चरित्रनाटकम्, मदनचरितनाटकम्, लोका-(कोला ?-)ऽसुरवधोपाख्याननाटकम्, त्रिचत्वारिंशदङ्ककं रामायणनाटकम् चेति षडन्यानि नाटकानि च प्रबोधचन्द्रबागचि-कृतोल्लेखाधारे सूर्यविक्रमेणोल्लिखितानि दृश्यन्ते (ने. उ. म. इ., पृ. २३७-२३८)। अन्यान्यपि इन्द्रविजयनाटक-कृष्णकैलासयात्रोपाख्याननाटक-खट्ट्वासुरवधोपाख्याननाटक-चन्द्राङ्गदोपाख्याननाटक-मान्धात्रुपाख्याननाटकादीनि उपदशानि रूपकाणि रणजिन्मल्लविरचितत्वेनोल्लिखितानि दृश्यन्ते। किन्त्विमानि सर्वाण्यपि रूपकाणि प्रायेण लोकभाषानिबद्धानि लोकमनोरञ्जनमात्रपराणि विलक्षणानि गीतिरूपकाणि प्रतीयन्ते, न तु भासकालिदासादिरचितरूपकसदृशानीति च स्मर्तव्यम्। एषां रूपकाणाम् मध्ये केषाञ् चन पुस्तकानि नेपालराष्ट्रियाभिलेखालये च सङ्गृहीतानि दृश्यन्ते। पञ्जीसङ्ख्या-प्रन्ध. प्र. ३६५; इन्द्र. प्र. ३६५; उषा. प्र. ३६५; कंसवध. (कृष्णचरित्र.) प्र. १३८२; कृष्णकै. तृ. ११६-२; कृष्णच. प्र. ३६०; कृष्णचरित्रो. प्र. ३६५; कोला. प्र. ३३१, ३६५; खट्ट्वा. प्र. ३६५; चन्द्राङ्गदो. प्र. ३६५; रामा. प्र. ३४५; १४१८, द्वि. ३५९ च ६३९।

## ४३. नीलकण्ठः

नैपालभक्तपुरराजं रणजिन्मल्लमाश्रितो नीलकण्ठः खलु ग्रहणाधिकाराख्यं (ग्रहणाधिकारटीकाम्)? चन्द्रग्रहणोदाहरणाख्यं सूर्यग्रहणाधिऽकारोदाहरणाख्यञ्च ज्योतिषग्रन्थं रचयामास किल। स जैमिनिसूत्रटीकाञ् च ज्योतिषविषयाञ् चकार। नीलकण्ठाख्येन केन चिद् रचितौ ज्योतिषकौमुदी समासविवेकश् चेति द्वौ ग्रन्थावपि नैपालराष्ट्रियाभिलेखालयसूचीपत्ते दृश्येते।

## ४४. गणेशः

नैपाल-भक्तपुरराज-रणजिन्मल्लसमये (१७७१-१८२६ वै.) वर्तमानो गणेशो नाम कश्चन कवी रामचरित्रन् नाम काव्यं रचयामास किल। रामचरितन् नाम एकम् पुस्तकन् नैपालराष्ट्रियाभिलेखालये स्थितन् दृश्यते। पञ्जीसङ्ख्या-प्र; ३३०। तत् परीक्षणीयं वर्तते।

## ४५. प्रेमनिधिपन्तः Ku

कूर्माचलनिवासिन उमापतिपन्तस्य पुत्रश् शालग्रामशिलाङ्करकृष्णा-

तदस्त्यपर्वतमण्डलराजम् मलैबम्ममाश्रितो भारद्वाजसगोत्रः प्रेमनिधिपन्तः पर्वतमण्डले स्थित्वाऽपि प्रायश्चित्तप्रदीपादीन् कांश्चन ग्रन्थान् प्रणिनाय किल। प्रेमनिधिना शिवताण्डवटीकायाम् मल्लादर्शाभिधायाम् मलैबम्मवंशवर्णनेन सह स्वपरिचयस्य प्रदानामैवलं लिखितमवगम्यते— "यस्योद्द्योतमती सती गुणवती माता पितोमापतिर् नाम प्रेमनिधीति पन्तकुलभूः कूर्माचलो जन्मभूः। तेनाऽष्टाब्धिषडिन्दुशाकगसितान्त्योर्जाद्यतिथ्यर्कनिट्-काले श्रीशिवताण्डवस्य विहितं सट्टिप्पणं सत्त्वरम्" इति। एतेनैव ग्रन्थः १६४८ तमे शकान्ताब्दे (१७८३ तमे वैक्रमाब्दे) रचित इति स्पष्टतया ज्ञायते। प्रेमनिधये मलयवर्मणा काश्यां शोभनं गृहमपि दत्तमभूदित्यपि "यन्त्रस्योपासकोऽयक्षितिपतितिलकश्श्रीमलैबम्मनामा काश्यां गेहं सुसौधम् निजकुलचरितानल्पसन्दर्शकस्य। मल्लादर्शस्य कर्त्रे स्वगुरुकरुणया प्रेमनिधनाह्वयाय श्रद्धाभिर् यो ददाति प्रणिभवतुतमामेव पूर्णाखिलार्थः" इति प्रेमनिधिलेखाद् ज्ञायते। प्रेमनिधिः १७८० तमे वैक्रमाब्दे प्रायश्चित्तप्रदीपम् चकारेति केचित्। गोपीनाथकविराजस्तु १६७५ तमे शकान्ताब्दे (१८१० तमे वैक्रमाब्दे) प्रेमनिधिः प्रायश्चित्तप्रदीपम् चकारेति वदति। प्रायश्चित्तप्रदीपस्य केषु चन पुस्तकेषु अद्ध्यायानामन्तेषु तस्यतस्याऽद्ध्यायस्य सारार्थो नेपालीयभाषायामपि दत्तोऽवगम्यते। प्रेमनिधिकृताश्च गोपीनाथाद्युल्लिखिता ग्रन्था इमे – कार्तवीर्यसपर्या, घृतदानपद्धतिः (घृतदानरत्नवं वा); नित्यप्रयोगरत्नाकरः, धर्मशास्त्रविषयकः पृथ्वीप्रेमोदयः, प्रयोगरत्नम्, प्रायश्चित्तप्रदीपः; भक्तितरङ्गिणी, मल्लादर्शाख्या शिवताण्डवटीका, शब्दार्थचिन्तामणिर् नाम शारदातिलकव्याख्या चेति। 'मल्लादर्शे प्रेमनिधिना तन्त्रप्रामाण्यविषये भट्टोजिदीक्षितमतङ्खण्डयित्वा स्वमतयं युक्तिभिस्स्थापितमस्ति, तन्त्राणां श्रुतिमूलकत्वमस्वीकृत्य स्वतःप्रामाण्यमङ्गीकृतमस्ति' इति च गोपीनाथः प्रतिपादयति। "तन्त्रराजस्य सुदर्शनाख्या टीका प्रेमनिधिकृतित्वेन पण्डितनिकाये प्रसिद्धाऽस्ति, तथापि सा प्रेमनिधितृतीयपत्न्याः प्राणमञ्जर्याः कृतित्वेनाऽऽत्मानमाविष्करोति' इति च 'काशी की सारस्वत साधना' इति ग्रन्थे गोपीनाथ आह। नित्यप्रयोगरत्नाकर-पृथ्वीप्रेमोदय-प्रयोगरत्न-प्रायश्चित्तप्रदीप-भक्तितरङ्गिणी-मल्लादर्श-शब्दार्थचिन्तामणि-हस्तलिखितपुस्तकानि नेपालराष्ट्रियाऽभिलेखालयेऽपि सङ्गृहीतान्यवगम्यन्ते। पञ्जीसङ्ख्या– नित्य द्द. ३६०, पृथ्वी.

च.७४०, अयो. प्र.१२४७?, आयम्. प्र.१७५, च. ११२; भक्ति.तू. २४, मल्ला. च. ७१८, शब्दार्थ. च. १२१, १४? ।

## ४६. गौरीश्वरः [पांडेः]

कूर्माचलाभिजनो नेपालत्रितुङ्गाचलमण्डलराजगुरुर् गोरक्षदेशाधीशनरभूपालसाहमाश्रितः कृष्णपौत्रो लक्ष्मणपुत्रो गौरीश्वरो नवश्लोकम् भुवनेश्वरीस्तवं रचयामास किल । ततस्तोत्रलेखो राष्ट्रियाभिलेखालये वर्तते । पञ्जीसङ्ख्या प्र.१६११, च.६३०। १८४२ तमे वैक्रमेऽब्दे श्रीघनश्यामेन लिखितञ्च ग्रहदीपिकापुस्तकन् नेपालराष्ट्रियपुस्तकालये स्थितमिति तदीयमुद्रितसूचीपत्रे द्वितीयभागे उल्लिखितमस्ति । तत्र ग्रहदीपिकाया रचयिता गौरीश्वर उक्तोऽस्ति । कोऽयञ्च गौरीश्वर इति विशेषतोऽन्वेषणीयत्वं वर्तते ।

## ४७. जयमङ्गलसूरिः [पौड्यालः]

नैपालसतहुँमण्डलकान्तर्गतग्वाँदिग्रामाभिजनत्वेन कैश्चित् सम्भाव्यमानः, कैश्चित् तु इतिहासविद्भिस् त्रितुङ्गाचलमण्डलान्तर्गतरिसिङ्कोपमण्डला-भिजनत्वेनोच्यमानस् त्रितुङ्गाचलमण्डल-राजगुरुपौड्यालकुलभवःप्रधानमन्त्रिरङ्गनाथपितामहः फलाहारिजोऽग्निहोत्री जयमङ्गलसूरिः पौड्यालः पृथ्वीनारायणस्य युवराजत्वस्य समये वृत्तकल्पलतिकां रचयामास किल । वृत्तकल्पलतिकायाम् प्राकृतपैङ्गलोक्ता विषया अपि समाविष्टा दृश्यन्ते । ते तु अदृष्टप्राकृतपैङ्गलकयोर् वृत्तकल्पलतिकासम्पादकानुवादकयोर् नानावितर्कहेतुताम् प्राप्ता अवगम्यन्ते । सेयं वृत्तकल्पलतिका मुद्रिताऽस्ति । अयञ् च जयमङ्गलः पौड्यालो वृत्तरत्नमाला-व्याख्याशुम्भिकायां लक्ष्मणेन स्वगुरुत्वेनोल्लिखितो दृश्यते । अयमेव पृथ्वीपत्न्या नरेन्द्रलक्ष्म्या गुरुत्वम् प्राप्ताया पौर्याः पतिरिति इतिहासे प्रसिद्धो देवीगुरुरप्यस्ति ।

## ४८. राजा त्रिविक्रमसेनः
## (शा. का. १७६८-१८२६ वै.)

नैपाल-त्रितुङ्गाचलमण्डलराजो विद्याधर्मप्रयासकत्वेनोच्यमानस् त्रिविक्रमसेनो तन्त्रसम्मतम् ब्रह्मविद्याभरणजपविधिञ् चकार किल । स च ग्रन्थ इदानीन् नैपालराष्ट्रियाभिलेखालये सुरक्षितो दृश्यते । पञ्जीसङ्ख्या प्र.३२ । तत्राऽन्ते "इति श्रीमन्नारायणकृतावतारपरमकारुणिक-

नागेश्वरानन्दनाथ-चरणद्वन्द्वोपासक-श्रीमत्त्रिविक्रमकृतिः, ब्रह्मविद्योपासकानाम् मद्ध्ये कृतपूर्णाभिषेकाणाम् ब्रह्मविद्याभरणजपविधिः'' इत्युल्लिखितवं वर्तते। त्रिविक्रमस्यैव प्रेरणया गौतमवंशजेन गङ्गाविष्णुना आचारदीपो नाम धर्मशास्त्रनिबन्धग्रन्थो विरचितो दृश्यते। त्रिविक्रमाज्ञया गङ्गाविष्णुना कृता शारदातिलकप्रतिलिपिरपि नैपालराष्ट्रियाभिलेखालये वर्तते। पञ्जीसङ्ख्या- प्र. ६१। त्रिविक्रमाऽऽज्ञया कुलनिधिना रचिता नित्यकर्मप्रकाशिका च मुद्रितोपलभ्यते।

## Kn४९. गङ्गाविष्णुः (१८०९ वै.)

त्रितुङ्गाचलमण्डलराजन् त्रिविक्रमसेनं समाश्रितोऽयङ्‌ गौतमवंशजत्वेनात्मानम् प्रतिपादयन् कूर्माचलाभिजनो रामभद्रपौत्रो जयदेवपुत्रो द्विजो गङ्गाविष्णुस् त्रिविक्रमसेनप्रेरणया आचारदीपकाख्यन् धर्मशास्त्रनिबन्धं रचयामास। अस्मिन् ग्रन्थे योगप्रकरणमप्यस्ति। अस्य ग्रन्थस्याऽन्तेऽनेन सेनराजवंश्यावलिरपि सङ्क्षेपेणोक्ताऽस्ति। तत्र गङ्गाविष्णुना स्वपरिचय एवन् दत्तोऽस्ति-''**विद्वान् गौतमवंशजो द्विजवरश् श्रीरामभद्राऽभिधस् तत्पुत्रो जयदेवनामधरणीदेवोऽभवत् पुण्यवान्। तत्पुत्रोल्पमतिर् निबन्धमकरोदाचारदीपाभिधङ्‌ गङ्गाविष्णुरनेकतन्त्रमवलोक्याऽऽज्ञाधरो भूपतेः॥ यद्यपि ग्रन्थनिर्माणयोग्यमद्ध्ययनन् न मे। तथापि क्षमम्यताम् प्राज्ञैस् साहसोऽयन् नृपाग्रहात्**'' इति। १६७४ तमे शकाब्दे (१८०९ तमे वैक्रमेऽब्दे) शिवशर्मभुवनेशाभ्यालं लिखितमाचारदीपपुस्तकं सम्प्रति नैपालराष्ट्रियाभिलेखालये सङ्गृहीतन् दृश्यते। पञ्जीसङ्ख्या- प्र. १५००। गङ्गाविष्णुहस्तलिखितो भानुदत्तकृतो रसतरङ्गिणीति अलङ्कारशास्त्रग्रन्थोऽपि नैपालराष्ट्रियाभिलेखालये दृश्यते। पञ्जीसङ्ख्या प्र. १४६६।

## Kn५०. कुलनिधिशर्मा

कूर्माचलाभिजनो नैपाल-त्रितुङ्गाचलमण्डलाऽन्तर्गत-चोकग्रामकृतनिवासः किल रामभद्रपौत्रो जयदेवपुत्रः कुलनिधिशर्मा खलु पाल्पाराजस्य द्वितीयमुकुन्दसेनवर्मणः प्रेरणया द्वितीयमुकुन्दसेने प्रशासति सति महादत्तसेने युवराजे विराजमाने पृथ्वीपालसेने नवयुवराजे च जाते सति कर्मकाण्डनिबन्धनन् नाम पद्धतिग्रन्थं रचयामास किल। तदुक्तन् तेनैव-''**श्रीमुकुन्दाज्ञया विद्वत्कुलाग्रनिधिशर्मणा। कृतिरारभ्यते सम्यक् कर्मकाण्ड-**

निबन्धने" इत्यादि । एष ग्रन्थस् सम्प्रति नेपालराष्ट्रियाभिलेखालये सङ्गृहीतो दृश्यते । पञ्जीसङ्ख्या च. ९३०, १०९१, १६९२, १८०६, ष. १७१२, १७१४, १८२० । त्रितुङ्गाचलमण्डलराजत्रिविक्रमाज्ञया कुलनिधिना रचिता नित्यकर्मप्रकाशिका तु मुद्रितोपलभ्यते । सूत्रार्थदर्पणाख्या पाणिनीयव्याकरणाऽष्टाध्यायीव्याख्या, सर्वोपकारिणीति भागवतव्याख्या, अमरकोशटीका च कुलनिधिना रचिता इति टीकारामशर्मणोल्लिखितमस्ति ।

## ५१. टीकारामः

लक्ष्मणकविना कवितानिकषोपले स्वदेशकविषु मध्ये द्वौ टीकारामौ उल्लिखितौ दृश्येते (पृ. ३८,३९) । तत्र कस्यचन टीकारामस्य महाराजकुतूहलम् इति ग्रन्थस् सम्प्रति नेपालराष्ट्रियाभिलेखालये सङ्गृहीतो दृश्यते । काव्यरूपस् स ग्रन्थः खण्डितोऽतिजीर्णदशागतत्वेनाऽप्रयोज्यश्च जातोऽवगम्यते । पञ्जीसङ्ख्या प्र. १६०९ ।

## ५२. लक्ष्मणकविः (१७६५–१८४५ वै. ?)

नेपालत्रितुङ्गाचलमण्डलजातः पश्चात् पृथ्वीनारायणमाश्रित इति कैश्चिदुच्यमानो लक्ष्मणकविः कवितानिकषोपलाख्यङ्ग्रन्थम् पृथ्वीनारायणशासनकाले रचयामास किल । कवितानिकषोपले पृथ्वीनारायणकृतकान्तिपुरविजयपर्यन्तो विषयः प्रतिपादितोऽस्ति । विजयवृत्तान्तस्तु कल्पित इवाऽऽभाति । अनेनाऽत्र स्वदेशकवित्वेनोक्तेषु त्रयोविंशतौ कविषु शक्तिवल्लभशर्मा, रामभद्रः, लक्ष्मणश्चेति त्रय एवाऽन्यत्राऽपि उल्लिखिताः प्राप्यन्ते । हरिदत्तशर्मादयोऽन्ये त्वनुल्लिखिता अन्यत्र । टीकारामस्य तु कस्यचन महाराजकुतूहलाख्यो ग्रन्थोऽपि प्राप्यत इति पूर्वमेवाऽवोचाम । लक्ष्मणकविर् ग्रन्थान्ते "**अध्यापनाय परमेश्वरि बालकानाम् मन्निर्मितोऽतिललितोक्तिचमत्कृतार्थः । नेपालजिन्नृपशिरोमणिकीर्तिशाली ग्रन्थोऽयमीक्षणपथं विदुषामुपैतु**" इति प्रार्थयते । कवितानिकषोपलोऽयम् मुद्रित उपलभ्यते । लक्ष्मणरचितो दानरत्नाकराख्यो धर्मशास्त्रनिबन्धोऽपि नेपालराष्ट्रियाभिलेखालये सङ्गृहीतः प्राप्यते । पञ्जीसङ्ख्या– प्र. ९८६; १२२४, तृ. २०६ । नृपपृथ्वीनारायणोद्दिष्टव्रतरत्नमालाव्याख्याऽपि जयमङ्गलसूरि-शिष्य-लक्ष्मणकृतित्वेनोल्लिखितोपलभ्यते । मुद्रिता चेयम् ।

## ५३. राजीवलोचन–पण्डितः

गौरीश्वरात्मजो वाणीविलासपितामहो राजीवलोचनपण्डितः पृथ्वीनारायणस्तुतिपरम् आशीर्वादावलिनामकङ् काव्यम् पृथ्वीनारायण-शासनकाले एव रचयामास किल । एतेन रामप्रबन्धनामकं स्तोत्ररूपन् त्रिषष्ट्युत्तरैकशतपद्यात्मकङ् काव्यमपि कृतमुपलभ्यत इति वदन्ति ।

## ५४. राजा पृथ्वीनारायणः (१७७९–१८३१ वैं.)

आधुनिक-नेपालीय-राष्ट्रनेमिस्स्थापकत्वेनोच्यमानस्य पृथ्वीनारायणस्य कृतित्वेन जयमङ्गलसूरिशिष्यलक्ष्मणकृतदिव्यप्रभाख्यटीका-समन्विता नेपालविजयान्तर्गतत्वेनोक्ता व्रतरत्नमाला मुद्रिता प्राप्यते । किन्तु तत्र ग्रन्थसमाप्तौ "इति श्रीश्रीमन्महाराजाधिराजश्रीश्रीश्रीमत्–पृथ्वीनारायणोद्दिष्टव्रतरत्नमाला समाप्ता" इति लेखम् पश्यताम् पृथ्वीनारायणचरितञ् च विचारयतावँ विवेचकानाम् मनसि इयं रचना पृथ्वीनाराणाश्रितेन केनापि पण्डितेन तदाज्ञया कृतेति विचार उदियादेव । व्याख्याकारोऽयँ लक्ष्मणः कवितानिकषोपलकार एव वाऽन्यो वेति च विवेचनीयमेव दृश्यते ।

## ५५. ललितावल्लभः

अविज्ञायमानकुलाभिजनकालोऽर्ज्यालत्वेन सम्भाव्यमानो ललितावल्लभः कविः पृथ्वीनारायणमाश्रितो भक्तविजयम् पृथ्वीन्द्रवर्णोदयञ्चेति लघु काव्यद्वयम् १८२६ तमे १८२७ तमे च वैक्रमेऽब्दे चकार किल । भक्तविजयकाव्यन् नरहरिनाथकृतव्याख्यया सहितम् मुद्रितम् प्राप्यते । पृथ्वीन्द्रवर्णोदयञ् च पृथक्पुस्तकतया पूर्णतया चाऽमुद्रितमस्ति । तथापि पुस्तकान्तरे टिप्पण्यादिरूपेणाऽस्य भूयानंशो मुद्रितो दृश्यते ।

## ५६. शक्तिवल्लभो भट्टाचार्योऽर्ज्यालः
## (१७८१–१८६३ वैं.?)

पृथ्वीनारायण–पूजितपादारविन्दक–लक्ष्मीनारायणार्ज्याल–पुत्रश् शक्तिवल्लभोऽर्ज्यालो राज्ञो रणबाहादुरस्य विधेयेन राजकुमारबाहादुरसाहेन कृतन् नेपालराज्यविस्तारमधिकृत्य १८४९ तमे वैक्रमेऽब्दे जयरत्नाकरनाटकं रचयामास किल । तच्च नाटकमितिहासदृष्ट्या महत्त्वपूर्णमपि अभिनेयार्थ-

काव्यदृष्ट्या नाऽतिमनोहरमस्तीति विवेचका वदन्ति । एतन् नाटकम् मुद्रितम् प्राप्यते । एतेन कृता अन्ये ग्रन्थाश् च हास्यकदम्बनाटकम् (नेपालीयभाषानुवादसहितम्), ललितमाधवनाटकम्; सुधातरङ्गिणीति तन्त्रविषयको ग्रन्थः, इन्द्रध्वजोत्सवः, दानप्रकाशः, पुरश्चरणचातुरी, भवार्थ-तत्त्वबोधश्चेति तदनुसन्धातृभिरुल्लिखिता दृश्यन्ते ।

## ५७. राधावल्लभोऽर्ज्यालः (१७८५–१८६९ वै.)

शक्तिवल्लभभ्राता मरणेऽप्यनुगामिनीभिः अयोध्या-सरस्वती-वसु-मती-कुलवतीन्दुमतीभिः पञ्चभिः पत्नीभिर् युक्तः पशुपतिनाथमन्दिरदक्षिण-द्वारस्स्य रजतमयस्स्य निर्माणायाऽर्थराशेर् विनियोजकोऽयं राधावल्लभो राज-राजेश्वरीकवचम्, उद्धवदूतम्, संस्कृतमञ्जरीञ् च चकार किल । राजराजे-श्वरीकवचम् (प्र. २४६१, १५५४), संस्कृतमञ्जरी (प्र. २२०, १३६७, १४६२, तृ. ४८६, च. १०३१) च नेपालराष्ट्रियाभिलेखालय–सूचीपत्रे दृश्येते ।

## ५८. चक्रपाणिः अर्ज्यालः (१७९०–१८४१ वै.)

नेपाल-गोर्खामण्डलनिवासी नारायणदासार्ज्यालपुत्त्रोद्धवदासवंशजो विद्यापतिपौत्त्रस् सत्यधरपुत्त्रश् चक्रपाणिरर्ज्यालः पृथ्वीनारायणविजय-विषयान् दशश्लोकीं रचयामास किल । एषाऽशुद्धियुता दशश्लोकीतिहास-प्रकाशस्य प्रथमेऽङ्के एकनवतितमे पृष्ठे मुद्रिता दृश्यते । तत्त्रोक्तञ् चक्रपाणिप्रणीतं राजपुस्तकालयस्स्थञ् ज्योतिषपुस्तकञ् किमिति तु नाऽ-द्यापि विशेषतो ज्ञायते । चक्रपाणेः प्रश्नतत्त्वम् इति उत्तानगणितम् इति च द्वौ ग्रन्थौ विष्णुप्रसादभण्डारिसम्पादितौ पद्मनाभकेसरिणा प्रकाशितौ १९९१तमे वैक्रमेऽब्दे वाराणस्याम् मुद्रितौ प्राप्येते । ग्रहणतत्त्वम् जातकेन्दुप्रक्रियेति च द्वावन्यौ ग्रन्थावपि चक्रपाणिकृतौ राष्ट्रियपुस्तकालयादिपुस्तकसूचीपत्त्रेषु दृश्येते । अघोषतन्त्रम्, गुणवाक्यबोधः, चिकित्साग्रन्थश्चेत्यन्येऽपि ग्रन्थास् तदीयग्रन्थत्वेन टीकारामशर्मणोल्लिखिता दृश्यन्ते । चक्रपाणिचर्चेत्यन्यस् तदीयो ग्रन्थो जयमन्तमिश्रमहाभागेनोल्लिखितो दृश्यते ।

## ५९. राजा प्रतापसिंहः (१८०१–१८३४ वै.)

पृथ्वीनारायणपुत्त्र-प्रतापसिंहविरचितत्वेन बृहत्पुरश्चर्यार्णवो मुद्रितः प्रकाशमागतो वर्तते । तत्त्र प्रतिज्ञावाक्यम् "श्रीमत्साहप्रतापसिंहधरणी-

पालेन नानाऽऽगमान् दृष्ट्वा सर्वजनोपकारकपुरश्चर्यार्णवस् तन्यते" इति दृश्यते। समाप्तौ च "श्रीमत्प्रतापसिंहेन विद्याब्धेः पारदृश्वना। सर्वे वत्सरे निशानाथचन्द्रिन्नागधराङ्किते (१८३१)॥ तपस्यर्जुनपक्षेऽहि-तिथौ भास्करवासरे। पुरश्चर्यार्णवो नाम ग्रन्थ एष विनिर्मितः" इत्युपलभ्यते। वैष्णव-शैव-शाक्तादितन्त्रग्रन्थेभ्यो वचनानि विस्तरेण सङ्गृह्याऽत्र आम्नायभेद-देवभेद-दैवतपञ्चकाभेद-तान्त्रिकमार्गभेदोपासनाभेद-दीक्षा-मन्त्रसंस्कार-क्रमदीक्षा-पूर्णाभिषेक-पुरश्चरण-माला-मुद्रा-मन्त्र-जप-गणाधिपादिमन्त्र-दशमहाविद्यादिकास् तान्त्रिकविषयाः प्रतिपादितास् सन्ति।

## ६०. शशिधरः (१८०४-१९०६ वै. ?)

त्रिशूलगङ्गातटस्थप्रसुतपुरीजातत्वेनोच्यमानो विजेदिलदासप्रशिष्यत्वेन हरिभक्तशिष्यत्वेन च प्रतिपाद्यमानो विष्णुपाद्ध्यायपुत्रो जोसमणिसम्प्रदायानुयायित्वेनोल्लिख्यमानो रेसुङ्गानिवासी गृहस्थसाधुश् शशिधरः (पौड्यालस्) सप्तदशश्लोकान् तत्त्वगीताम्, त्रयोविंशतिश्लोकाम् अजपगीताम् च रचयामास किल। तौ च द्वौ ग्रन्थौ "जोसमनि सन्त परम्परा र साहित्य" इत्याख्ये ग्रन्थे २१७-२२१ इति सङ्ख्याङ्कितेषु पृष्ठेषु मुद्रितौ प्राप्येते। रेसुङ्गानिवासी शशिधरोऽन्यैर् लालमणि-पौत्रत्वेन दिसँशर्मपुत्रत्वेन मरासिनिकुलोत्पन्नत्वेन च प्रतिपादितो दृश्यते।

## ६१. रामभद्र उपाध्यायः

करुणाकरोपाद्ध्यायसुतः कवी रामभद्रः १८३६ तमे वैक्रमेऽब्दे प्रशस्तिरत्नन् नाम पत्रलेखनरीतिप्रतिपादकल् लघुक ग्रन्थञ् चकार किल। जीवशाहप्रेरणया रचितस् स च ग्रन्थः १०११ तमे वैक्रमेऽब्दे सुन्दरप्रसादसाहप्रकाशितो मुद्रित उपलभ्यते।

## ६२. गोकुलानन्दशर्मा (१८१०-१८६५ वै. ?)

नेपालदेशजोऽविज्ञायमानकुलाभिजनविशेषो गोकुलानन्दशर्मा रणबहादुरसाहाशीर्वादावल्याख्यम् चतुश्चत्वारिंशच्छ्लोकात्मकं स्तुतिकाव्यस् १८४४ तमे वैक्रमेऽब्दे रचयामास किल।

## ६३. राघवशर्मा (१८१०-१८९८ वै. ?)

नेपालदेशजोऽज्ञातकुलाभिजनविशेषो राघवशर्मा श्री५रणबहादुर-

साहविरुदावलीति संस्कृतभाषा–हैन्दवभाषा-नैपालीयभाषामयम् पञ्चचत्वा-रिंशत्पद्यकम् प्रशस्तिकाव्यम् १८५२ तमे वैक्रमेऽब्दे रचयामास किल । तच्च काव्यं सम्प्रति नैपालराष्ट्रियाभिलेखालये सङ्गृहीतमुपलभ्यते । पञ्जीसङ्ख्या–द्वि. २३०।

## ६४. उदयानन्दोऽर्ज्यालः (१८१३-१८६४ ?)

नैपालगोर्खामण्डलाभिजनस् सप्तरिमण्डलान्तर्गत-बैरबा-ग्राम–निवासी वीरेश्वरपौत्रो विश्वेश्वरपुत्र उदयानन्दोऽर्ज्यालो दुस्स्वप्नदोषहरस्तोत्रन् नवरत्नस्तोत्रापराभिधम् १८६१ तमे वैक्रमेऽब्दे रचयामासेति श्रीरामजी-प्रसादार्यालेनोक्तमस्ति । अधिकं विवरणन्तु नैव दत्तम् ।

## ६५. लक्ष्मीपतिः पांडेः (१८१५–१८८८ वै.)

नैपाल–गोर्खा–मण्डले गाड्खुरग्रामे १८१५ तमे वैक्रमेऽब्दे जातः कृष्णानन्दपुत्रो लक्ष्मीपतिः पांडेः बहादुरसाहमाश्रितस् सन् १८५४ तमे वैक्रमेऽब्दे सूर्यसिद्धान्तानुसारिणं रत्नदीपनामकं सिद्धान्त-ज्योतिष-ग्रन्थम् प्रणिनाय किल । अन्येऽपि टीकाग्रन्थास् तेन रचिता इति तत्कार्यपर्यालोचकाः कथयन्ति । ग्रहस्थितिगत्यादिज्ञानोपयोगिनायँ यन्त्राणां रचनायामपि तस्योत्सुकत्वन् ते प्रतिपादयन्ति । लक्ष्मीपतिना निर्मापितम् पलभायन्त्रमद्यापि नैपालराष्ट्रियसङ्ग्रहालयेऽस्तीति च ते वदन्ति । रत्नदीपस्य मूलभागो मुद्रितः प्राप्यते । ततश्च तस्यान्तिमः कियानपि भागो नष्टोऽपूर्णो वा विज्ञायते । लक्ष्मीपतिग्रन्थत्वेन अन्त्यविधिश्लोकसङ्ग्रहः, उमाचण्डिकापूजाविधिः, दुर्गार्चनकल्पतरुः, लग्ननिर्णयः, ग्रहायन(ण?)सारणी, जातकमुद्रेत्यादयो ग्रन्थाष् टीकारामशर्मादिभिरुल्लिखिता दृश्यन्ते । पूर्णिमाया एकान्नत्रिंशेऽङ्केऽपि लक्ष्मीपतिग्रन्था बहव उल्लिखिता दृश्यन्ते ।

## ६६. दैवज्ञकेसरि अर्ज्यालः (१८२५–१८९३ वै. ?)

नैपालगोर्खामण्डलाभिजनो नारायणदासार्ज्यालवंशजः पृथ्वीनारायण-कुलपुरोहित–चक्रपाण्यर्ज्यालपुत्रो दैवज्ञकेसरि अर्ज्यालस् स्वकुलवर्णनात्मकङ्कुलचन्द्रिकाख्यङ्ग्रन्थं रचयामास किल । स च ग्रन्थो मुद्रित उपलभ्यते । दैवज्ञकेसरिणा ग्रहणमालाऽपि रचितेति टीकारामशर्मणोल्लिखितमस्ति ।

## ६७. देवकीनन्दनोऽर्ज्याल: (१८२५ वै.?- ?)

नेपाल-गुल्मिमण्डलान्तर्गताऽमरभूमि-(मर्भु ङ)वास्तव्यस् सुमन्त्व-पराभिधश्श्रीपतिपुत्रचिन्तुकुलजः पूर्वं सन्न्यस्तत्वेन पुनर्गार्हस्थ्यम् प्रपन्नत्वेन च तद्वंशधरैरेवोच्यमानस्य योगिदासस्य प्रपौत्रो मुकुटमणिपौत्रो जनमेजय-पुत्रो देवकीनन्दनोऽर्ज्याल: पञ्चशतपत्रपृष्ठलेख्यमाचारादर्शम्,तर्कसङ्ग्रहस्य संस्कृतपद्यरूपान्तरणञ् च चकार किल । तयोर् ग्रन्थयोरिदानीङ् कुत्रोपल-भ्यतेति तु विष्णुराजात्रेयादिभिर् नैवोल्लिखितन् दृश्यते ।

## ६८. वाणीविलास: पाँडे: (१८२७–१८८८ वै. ?)

गौरीश्वरप्रपौत्रो राजीवलोचनपौत्रो रामहृदयपुत्रो गङ्गाराम-शास्त्रिशिष्यो राजकुलमाश्रितो वाणीविलास: पाँडे: उच्चावचान् नव ग्रन्थान् रचयामासेति इतिहासज्ञा वदन्ति । तत्र निर्णयसिन्ध्वादिसदृशो वाणीविलाससिद्धान्ताख्यो धर्मशास्त्रनिबन्धग्रन्थो मुख्य: प्रतीयते । अन्ये ग्रन्थाश्च दुर्गाकृत्यकौमुदी, पुरश्चरणप्रयोगरत्नदीपिका, वेदान्तसारसङ्ग्रह:, प्रशस्तिरत्नावलि:, नवरत्नयुगलस्तोत्रमित्यादय: । तत्र प्रशस्तिरत्नावलिर् मुद्रितोपलभ्यते ।

## ६९. गौरीदत्तशर्मा पौड्याल: (१८३०–१८९५ वै. ?)

गौरीदत्तशर्मा पौड्यालश् श्री५राजेन्द्रवर्णनन् नाम काव्यं रचयामास किल । श्री५राजेन्द्रयशोवर्णनमिति, श्री५राजेन्द्रसाहवर्णनमिति च द्वौ ग्रन्थौ नेपालराष्ट्रियाभिलेखालयसूचीपत्रे दृश्येते । तौ ग्रन्थौ परीक्षणीयौ वर्तेते ।

## ७०. रङ्गनाथ: पौड्याल: (१८३०–१९०४ वै. ?)

नेपालत्रिशुङ्गाचलमण्डलाभिजनो गोरक्षराजमाश्रित: काष्ठमण्डप-निवासी जयमङ्गल-पौड्यालनप्ता पण्डितराज-व्रजनाथपुत्र: १८९४तमे वैक्रमेऽब्दे प्रधान-मन्त्रिपदमप्यारूढो रङ्गनाथ: पौड्यालो गीर्वाणयुद्धविक्रमशिक्षणाय राज-विधानसारनामकन् नीतिशास्त्रग्रन्थम् प्रणिनाय किल । तस्य ग्रन्थस्य प्रारम्भे रङ्गनाथो "नानानिबन्धनविलोकनखेदशान्त्यै सङ्गृह्य धर्मनयमूल-वचो विभाव्य । सारन् निगृह्य नृपशिक्षणकौतुकाय श्रीरङ्गनाथ-कृतिना रचितो निबन्ध: ।। नेपालदेशाऽलिक-कान्तिपुर्याङ् गीर्वाण-

युद्धोत्तरविक्रमस्य । राजाधिराजस्य मनस्सरोजम् प्रकाशयेद् राजविधानसारः" इति ब्रवीति । तस्य ग्रन्थस्य द्वितीयस्य विलासस्याऽन्ते रङ्गनाथः "ख्यातः पण्डितराजरम्यपदवीयं यो ह्यद्रिराजेश्वरादाप्तश् श्रीव्रजनाथनामविदितो वेदाङ्गशास्त्रोज्ज्वलः । भूपानन्दिनि तत्सुतेन रचिते नीतिप्रबन्धेऽतुले सम्पूर्णो नृपधर्मबोधनिपुणो हं तो विलासश् शुभः" इत्युक्त्वा "इति श्रीमद्विद्वन् (मुकुट) मणिगणकिरणनीराजितचरणश्रीपण्डितराजव्रजनाथपण्डितात्मज-श्रीपण्डितराजरङ्गनाथसूरिविरचिते राजविधानसारे राजधर्मकथनो नाम द्वितीयो विलासः । शुभमस्तु समीक्षणकर्तुः" इति च वदति । कर्पूरस्तवदीपिकान्ते तु 'इति श्रीमद्विद्वत्कुलमुकुटमणिनीराजित-गिरिराजराजेन्द्रपूजित-पादपद्म-श्रीपण्डितराज-व्रजनाथसूरिसूनुरङ्गनाथविद्वन्निर्मिता कर्पूरस्तवदीपिका समाप्ता' इत्येवोक्तम् दृश्यते । तथापि १८६२ तमे वैक्रमेऽब्दे रणबहादुरसाहाय गीर्वाणयुद्धविक्रमेण दत्ते मुखाधिकृतिपत्रेऽपि द्वारकेषु "रङ्गनाथ-पण्डितराज-जु" इत्युल्लेखः प्राप्यते । व्रजनाथाय पण्डितराजोपाधिम् ददता अद्रिराजेश्वरेण तस्य पाण्डित्यं स्वयम् परिज्ञातवं वा पण्डितसभाद्वारा वा परिज्ञातमिति किमपि न ज्ञायते । रङ्गनाथेन तु आत्मना पण्डितराजोपाधिः कस्मात् प्राप्त इति नैव सूचितम् । व्रजनाथेन स्वकीयपण्डितराजत्वपरिचायकम् पाण्डित्यपूर्णञ्च किमपि चिह्नमस्माकञ्च कृते स्थापितम् न वेत्यपि न ज्ञायते । रङ्गनाथेन तु तस्य पण्डितराजत्वस्य परीक्षणायाऽस्माकञ्च कृते राजविधानसार इति कर्पूरस्तवदीपिकेति च द्वौ ग्रन्थौ दत्तौ ज्ञायेते । तौ च ग्रन्थौ मुद्रितावुपलभ्येते ।

## ७१. पृथ्वीपालसेनः

नेपाल–पाल्पामण्डलराजोऽयम् पृथ्वीपालसेनः प्रसादकौमुद्याख्यम् पाणिनीयव्याकरणप्रक्रियाग्रन्थं रचयामास किल । एष पृथ्वीपालसेनः १८६१ तमे वैक्रमेऽब्दे पाल्पाराज्ये गोर्खाराज्ये विलीने सति ललितपुरराजभवने निरुद्धस् सन् रणबहादुरसाहहत्याकर्मणि संलग्न इत्यारोपे १८६३ तमे वैक्रमेऽब्दे मृत्युदण्डम् प्राप किल । प्रसादकौमुदीग्रन्थोऽधुना नैपालराष्ट्रियाऽभिलेखालये सङ्गृहीतो दृश्यते । तस्य ग्रन्थस्योत्तरार्धस्य पञ्जीसङ्ख्या तु. १४८ वर्तते । तदन्ते "इति श्री-अनवद्यगद्यपद्यविनोदोद्योति-

तान्तःकरण-वाङ्मनसगोचर-मही-मण्डित- श्रीमन्महाराजाधिराज-पृथ्वीपालसेनभूपुरन्दरविरचितायाम् प्रसादकौमुद्यामुत्तरार्धं सम्पूर्णम्" इत्युल्लिखितमस्ति। पूर्वार्धमपि तत्र सङ्गृहीतमस्तीति श्रूयते पञ्जीसङ्ख्या तु अविज्ञायमानाऽस्ति। तत् षष्ठ्याम् पञ्जिकायाङ कुत्र चित् पञ्जीकृतं स्यात्।

## ७२. अग्निधरदेवकोटा: (१८३५-१८८० वै. ?)

नैपाल-गोरक्षाचलमण्डलान्तर्गत-लिग्लिग-बोहोराग्रामनिवासित्वेन सम्भाव्यमानोऽग्निधरदेवकोटा: गीर्वाणयुद्धविक्रमराज्यारोहणात् प्रभृति लम्जुङविजयं यावद्(?) घटनावलिं वर्णयित्वा गोर्खाविजयतिलकाख्यङ काव्यञ् चकार किल। गोर्खात: पाल्पाङ गतस्य माधवप्रसाददेवकोटाकस्य पुत्रात् कुलमणिदेवकोटाकात् प्राप्य आद्यन्तभागविकलमपि तन् नरहरिणा नाथेन इतिहासप्रकाशसन्धिपत्रसङ्ग्रहनामके ग्रन्थे मुद्रापितमित्यवगम्यते।

## ७३. भवदत्त: (१८५९ वै.)

अविज्ञायमानकुलाभिजनादिको भवदत्त: कवि: खलु एकान्नषष्ट्या पद्यै: कतिभिश्चन गद्यखण्डिकाभिश्च सेनवंशवर्णनम् १७२४ तमे शकान्ताब्दे (१८५९ तमे वैक्रमाब्दे) चकार किल। तेन स्वग्रन्थान्ते "**शाके चतुर्भुजधराधरभूमियुक्ते रात्रिन्दिवं वृषबलादुपचीयमानाम्। श्रीरत्नसेनकुलजावनिजानिवंशमुक्तावलिङ ग्रथितवान् भवदत्तधीमान्**" इत्युक्तमस्ति। एष ग्रन्थस् सेनवंशावलीति नाम्ना वीरपुस्तकालयेन (२०२० तमे वैक्रमाब्दे) प्रकाशिते ग्रन्थे सङ्गृहीतोऽस्ति। भवदत्तस्य काव्यरचनाशक्तिस् तत्र स्थानेस्थाने व्यक्ता दृश्यते।

## ७४. इन्द्रसेन: (१८६९ वै.)

इन्द्रसेन: खलु १८६९ तमे वैक्रमेऽब्दे सारसङ्ग्रहनामकं शालिहोत्रशास्त्रग्रन्थम् (अश्वशास्त्रग्रन्थम्) प्रणिनाय किल। स च ग्रन्थ इदानीन् नेपाल-राष्ट्रियाऽभिलेखालये सङ्गृहीतो दृश्यते। पञ्जीसङ्ख्या प्र. ८१६।

## ७५. मकरन्दपण्डित: (?)

नेपालदेशमद्ध्यभागस्थ-त्रिशूलगाचलमण्डलान्तर्गत-वसन्तपुरग्राम-निवासी मकरन्दपण्डित: खलु ज्ञानदर्पणाख्यङ ग्रन्थञ् चकार किल। एतस्य

ग्रन्थस्योल्लेखश् शिवशर्मसूरिणा स्वकृते वासुदेवरसानन्दे कृतोऽस्ति (पृ.३२, १८२)। ज्ञानदर्पणस्थो "**दुर्वासनाविषावर्ते भवाब्धौ भ्राम्यतान् नृणाम्। कथञ्चिदुपसन्नानामेको रामः परायणम्**" इति श्लोकश्च तत्रोद्धृतो दृश्यते। तथैव मकरन्दपण्डितकृतम् "**मनोधृताधोक्षजपादपङ्कजा दयार्द्रशीलार्पितलोकमङ्गलाः। क्षिपन्ति तापत्रितयवँ वपुष्मतां सदुक्तिभिर् भागवतास् सुदुर्लभाः**" इति पद्यमपि तत्रोल्लिखितम् प्राप्यते। मकरन्दपण्डितग्रन्थस्तु नष्टः प्रतीयते।

## ७६. अमृतानन्दः पण्डितः [बाँडाः] (?–?)

नेपाल-ललितपुरनिवासी रामानन्दपुत्रो जयलक्ष्मीकुक्षिजस् सुन्दरानन्दाग्रजः अमृतानन्दः खलु अश्वघोषकृतस्य बुद्धचरितस्य नष्टांश् चतुर्दश-पञ्चदश–षोडश–सप्तदश–सर्गान् स्वयं रचयित्वा पूरयामास किल। तथैव स नैपालीय–देवता–कल्याणपञ्चविंशतिः, धर्मकोशसङ्ग्रहः, छन्दोऽमृतलता इति संस्कृतग्रन्थांश्च रचयामास। एतद् विवरणञ्च कमलप्रकाशमल्ललेखमुपजीव्याऽस्माभिरत्रोपस्थापितमस्ति। स चाङ्गलभाषारचितो लेखो 'नेप्लिज् लिङ्ग्विष्टिक्स्' इत्याख्यायाम् पत्रिकायाम् प्रकाशितोऽवगम्यते।

## ७७. सुन्दरानन्दः पण्डितः [बाँडाः] (१८४०–१९०१ वै. ?)

नेपाल-ललितपत्तननिवासी सुन्दरानन्दो ललितत्रिपुरसुन्दरी-राजेन्द्र-भीमसेनथापा–प्रशंसापराम् पृथ्वीनारायणवंशेतिहासयुतान् त्रिरत्नसौन्दर्यगाथाम् १८९० तमस्य वैक्रमाब्दस्याऽऽसन्ने काले प्रणिनाय किल। तथैव स बहादुरसाहवर्णनमपि रचयामास किल। तत्र त्रिरत्नसौन्दर्यगाथा धनवज्र-वज्राचार्यादिसम्पादिता मुद्रितोपलभ्यते। ललितपुरनिवासि–सुन्दरानन्द-वज्राचार्यकृतित्वेन पृथ्वीनारायणदिग्विजयाख्यैका लघ्वी रचनाऽपि प्राप्यते। सा चेतिहासप्रकाशसन्धिपत्रसङ्ग्रहे ७५१तमादिषु पृष्ठेषु मुद्रिता दृश्यते।

## ७८. राजा गीर्वाणयुद्धविक्रमः (१८५४–१८७३ वै.)

नेपालराजो गीर्वाणयुद्धविक्रमस् सत्कर्मरत्नावल्याख्यञ्च कर्मकाण्ड-धर्मशास्त्रनिबन्धग्रन्थम् १७३४ तमे शकान्ताब्दे (१८६९ तमे वैक्रमाब्दे)

प्रणिनाय किल । तदुक्तम् "**शाके वेदधनञ्जयाद्रिवसुधायुक्ते सिते चाऽऽश्विने द्वादश्यां शनिवासरे शतभिषङ्नक्षत्रसद्योगिनि । वृद्धौ योगवरे स्वकान्तिनगरे रत्नावलीनामको गीर्वाणादिकयुद्धविक्रमनृपेणाऽयम् निबन्धः कृतः**" इति । किन्तु तदा पञ्चदशवर्षवयस्को गीर्वाणयुद्धविक्रमो नूनम् पण्डितमण्डलीद्वारैवेमङ्ग ग्रन्थम् चकारेति मानुषबुद्धिकल्पना न न प्रसरति । एतस्मिन् ग्रन्थे बह्व्यः कर्मकाण्डपद्धतयो धर्मशास्त्रनिर्णयाश्च सङ्गृहीता दृश्यन्त इत्ययङ्ग ग्रन्थस् साधारणतया उपयोगी एव वर्तते । तथापि स्थानेस्थाने ग्रन्थकारो कानि चन निर्णयसिन्ध्वादिप्रकरणानि सम्यगवबुद्ध्वैव स्वग्रन्थे विसंस्थुलतया सन्निवेशयति, स्वशाखाप्रतिकूलतयाऽपि कर्माणि प्रतिपादयतीति, सम्पादकाभ्यामपि तादृशेषु स्थलेषु सर्वत्र टिप्पण्यः कर्तव्या अपि न कृता इति च विद्वद्भिस् सावधानतया प्रयोज्योऽस्त्येष ग्रन्थः । "**ग्रन्थाननेकानवलोक्य सम्यङ्ग निरूप्यते कर्मविचारतत्त्वम् । कृपा विधेया कृतिभिर्ममोपरि पितेव पुत्रस्य सखेव सख्युः**" इति एतदीये पद्ये (प्रथमे भागे चतुर्थे पृष्ठे वर्तमाने सप्तदशे पद्ये) वाक्यरचनाऽपि सावद्या दृश्यते । मुद्रितोयमुपलभ्यते ग्रन्थः ।

## Ku.? ७९. वाणीनिधिः (१८७७ वै.)

वाणीनिधिर् नाम कश्चन भारतवर्षीयराष्ट्रियताजागरणकामो नीतिशास्त्रज्ञः कविरलङ्घ्यशासनम् नाम आर्यावर्तक्षितीशप्रोत्साहनपरङ्ग काव्यम् १८७७ तमे वैक्रमेऽब्दे रचयामास किल । एतत् काव्यम् इतिहासप्रकाशसन्धिपत्रसङ्ग्रहे मुद्रितमुपलभ्यते । एतस्य काव्यस्याऽन्ते "**प्रोद्यद्राजन्यमार्तण्डकरसाहस्रमर्दितः । गोरण्डद्ध्वान्तनिकरो विलयं यातु मा चिरम् ।। शाके विक्रमके सप्तसप्ताष्टकसमे सति । मार्गशीर्षे सुचिन्त्येमाव् विचार्याकरयन् धिया**" इत्युल्लिखितम् दृश्यते । वाणीनिधिर् गोरक्षाधीशचम्पूमपि रचयामासेति केचिद् वदन्ति । इयम् चम्पूरितिहासप्रकाशे द्वितीयेऽङ्के तृतीये भागे मुद्रितोपलभ्यते ।

## Ku. ८०. धरणीधरपन्तः (१८८८ वै. ?)

प्रेमनिधिपन्तानुजहरिनिधिपन्तनप्ता रेवाधरपुत्रो धरणीधरपन्तो राजेन्द्रसाहं रङ्गनाथबुधम् भीमसिंहम् चोल्लिखन् ईशतत्त्वमितिनामकम् ईशावास्योपनिषद्व्याख्यानरूपं सगुणब्रह्मवादिग्रन्थम् १८८८ तमस्य वैक्र-

माब्दस्याऽऽसन्ने समये रचयामास किल । तस्यान्ते तेन "ये कर्मैकपरा न चेशमनने तान् नास्तिकान् मन्महे द्विष्मस् तानसतः कुतर्ककलनाद् वैनाशिकान् नास्तिकान् । ये ब्रह्मैक्यविदोऽपजीवमतयस् ते त्वर्ध-वैनाशिका ये त्वात्मद्वयतत्त्वशुद्धमतयस् तानेव भूयस् स्तुमः" इत्युक्तम् दृश्यते । धरणीधरेण कृता रामतापनीयोपनिषद्व्याख्या, रामरक्षाविवेकः, कालनिर्णयव्याख्या, चातुर्वर्ण्यविवेचनम्, चातुर्वर्ण्यव्यवस्था, सापिण्ड्यतत्त्वम् इत्यन्येऽपि ग्रन्था श्रोफ्रेक्टसूचीतो ज्ञायन्ते इति बाबुराम आचार्यश् 'शिव-शर्मा पण्डित' इति निबन्धे भानुभक्तस्मारकग्रन्थे (प्र. सं.) ब्रवीति ।

## ८१. शिवशर्मा सूरिः (१८९० वै.)

नेपालदेशमध्यभागस्थ–त्रितुङ्गाचलमण्डलान्तर्गतवसन्तपुरग्रामाभि-जनो मकरन्दपण्डितपुत्रो गङ्गादेवीगर्भजश् शिवशर्मा सूरिः खलु रामचिन्ता-लहरी, रामायणार्थप्रकाशः,कृष्णमहिमा, गोविन्दगुणानन्दः, वासुदेवरसानन्दश् चेति ग्रन्थान् प्रणिनाय किल । तत्राऽन्येषाङ्ग्रन्थानाम् वासुदेवरसानन्दे उल्लेखाः प्राप्यन्ते । (पृ. २७६; १७६; १८२; २१८; १८२; २६७) । वासु-देवरसानन्दस् तु तेन १८९० तमे वैक्रमेऽब्दे रचितः, आदित्यरामभट्टाचार्येण प्रथमम् मूलमात्रम् मुद्रापयित्वा वितीर्णः, १९९२ तमे वैक्रमेऽब्दे प्रयाग-दारागञ्जस्थशिवशर्मपाठशालाप्रबन्धकारिसमित्या भाषानुवादसहितो मुद्रा-पितः प्राप्यते । तत्र **"वासना वासुदेवस्य वासितम् भुवनत्रयम् । सर्वभूतनिवासीनावं वासुदेव नमोऽस्तु ते"** इति श्लोकस्य व्याख्यायाः प्रसङ्गेन ज्ञानशास्त्रप्रक्रिया, श्रीभगवद्भक्तिशास्त्रम्, वैष्णवोऽष्टाङ्गयोग इति विषया विस्तरेण प्रतिपादितास् सन्ति । "आदित्यरामभट्टाचार्येण प्रयागे दारागञ्जप्रदेशे दशाश्वमेधमहादेवमन्दिरसमीपे गङ्गातटे शिवशर्माणम् प्रति श्रद्धाया अतिरेकेण शिवशर्मपाठशाला स्थापिताऽस्ति, सा च काशि-हिन्दु-विश्वविद्यालयेन सम्बद्धाऽस्ति, तस्यामेव पाठशालायाम् भट्टाचार्येण स्वमातुर् धन्यगोप्या नाम्ना धन्यगोपीपुस्तकालयोऽपि संस्थापितोऽस्ति, तत्रैव पुस्तकालये शिवशर्महस्तलिखितं वासुदेवरसानन्दपुस्तकं सुरक्षितं वर्तते' इति वासुदेवरसानन्दपुस्तकप्राप्तिवृत्तान्तवर्णनपूर्वकम् बलदेवदेवमहा-शयेन पुस्तकपरिचये वासुदेवरसानन्दसल्लग्ने प्रतिपादितमस्ति । शिवशर्म-सूरिणा च वासुदेवरसानन्दसमाप्तौ **"इतिश्रीवासुदेवरसानन्दस् सदद्वै-ताभिमतविद्वन्मण्डलीमण्डनायमान-त्रितुङ्गाचलवसन्तपुरवास्तव्य-**

गङ्गादेवीद्वितीयश्श्रीमकरन्दपण्डितस्स्य महात्मनः कुमारेण शिवशर्मसूरिणा विरचितस् सम्पूर्णतामहैषीत्" इत्युल्लिखितवं वर्तते । ग्रन्थपूर्तिसमयश्च "गगनग्रहगजचन्द्रैमितवत्सर औरगे तिथौ गौरे । राधे बुधे प्रयागे कृतिरियमुदभून् मुदे विदुषाम्" इत्युल्लिखितो वर्तते । शिवशर्मविरचितवं विष्णुमहिम्नस्तोत्रञ् च वासुदेवरसानन्दपरिशिष्टत्वेन मुद्रितमुपलभ्यते ।

## ८२. राजा राजेन्द्रविक्रमसाहः (१८७०-१९३८)

नेपालराजो रणबहादुरसाहपौत्त्रो गीर्वाणयुद्धविक्रमपुत्त्रो राजेन्द्रविक्रमसाहः खलु चतुर्दशपटलात्मकं राजकल्पद्रुमाभिधन् तन्त्रशास्त्रनिबन्धग्रन्थं रचयामास किल । स च ग्रन्थस् सम्प्रति नेपालराष्ट्रियाभिलेखालये सङ्गृहीतो दृश्यते । पञ्जीसङ्ख्या द्वि. ३२;७१;९५। राजेन्द्रविक्रमसाहकृतं श्रीस्तोत्त्रमपि तत्त्रैव सङ्गृहीतन् दृश्यते । पञ्जीसङ्ख्या द्वि. १४२ ।

## ८३. सुकृतिदत्तः पन्तः (१८८०-१९३० वै.)

कूर्मधराधरेन्द्राभिजनो नेपाल-बागलुङमण्डलनिवासी सुकृतिदत्तः पन्तः १९२८ तमे वैक्रमेऽब्दे सप्तदशसर्गात्मकम् १७४० पद्यैर् युतङ् कार्तवीर्यचरितनामकङ् काव्यम् पूर्णम् चकार किल । एतत्काव्यप्रणयनात् पूर्वमेव स सिद्धान्तवादः, स्फोटवादः, रत्नावली, गङ्गाप्रसादः, मन्दारमाला, छन्दःप्रबन्धश्चेति षड् ग्रन्थानपि प्रणिनाय किल । किन्तु एते ग्रन्था इदानीमुपलभ्यमाना न सन्ति । कार्तवीर्यचरितमेकमुपलभ्यते । एतद्ग्रन्थविषये सङ्क्षेपेणाऽनेकैर् विद्वद्भिर् लिखितन् दृश्यते । केन चिदिदङ् काव्यम् मुद्रापयितुमारब्धमस्तीत्यपि श्रूयते । कार्तवीर्यचरितन् नैषधीयचरितानुकारि प्रतीयते । नैषधीयचरिते इवाऽत्त्राऽपि सर्गान्तेषु कविना स्वपरिचयो दत्तोऽस्ति । तथा हि "श्रीमत्कूर्मधराधरेन्द्रवसतिप्रख्यातपन्तान्वये जातश् श्रीभवदत्तपण्डितवरश् श्रीभार्गवी तत्प्रिया । लेभाते सुकृतिं सुतन् निजमतेस् संशुद्धये तत्कृते काव्येऽस्मिन् कृतवीर्यसूनुचरिते सर्गोऽयमादिर् गतः" इत्यादि । एतस्मिन् काव्ये कवेरलङ्कारप्रयोगे पाण्डित्यप्रदर्शने च यादृशी तत्परता दृश्यते न तादृशी तत्परता काव्यस्य रसभावमयतायास् सम्पादने । उक्तं हि कविनाऽपि– "फणिपतिभणितिप्रविष्टचेता उदयनवाचि विशारदस् स्मृतिज्ञः । भरतवचनभारतोक्तिविज्ञो मम कृतिदर्शन-

मातनोतु विद्वान्" इति (१७।१७) । एतत्सम्बन्धे च चिरन्तनस्य काव्यसमालोचकस्य भामहस्य "काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्। उत्सवस् सुधियामेव हन्त दुर्मेधसो हताः ।" इति (२।२०) उक्तिस् स्मर्यते । कार्तवीर्यचरितकाव्यरचनापूर्तिसमयश्च कविनैवं वर्णितोऽस्ति "नागेन्द्रनेत्रनवभूमितवैक्रमाब्दे (१९२८) वैशाखमास-सितपक्ष-तृतीयतिथ्याम् । श्रीकार्तवीर्यचरितोदित-काव्यमेतच्च छीतारिणीकरुणया परिपूर्णमासीत्" (१७।३५) इति ।

## ८४. वाचस्पतिःपन्तः (?–?)

कूर्माचलपरमाभिजनो नैपालपाल्पामण्डलाभिजनः काष्ठमण्डपनगरनिवासी गोरिखनाथपन्तवंशजः इन्दिरारमणनप्ता नीलदेवपुत्रो वाचस्पतिः पन्तः खलु रणोद्दीपसिंहमाश्रितः पण्डितः प्रतीयते। एतस्य जन्मवर्षनिधनवर्षादिकन्तु किमपि न ज्ञायते । नीलदेव इव वाचस्पतिरपि धर्ममीमांसा–ब्रह्ममीमांसान्यायादिशास्त्रज्ञ आसीदिति वदन्ति । वाचस्पतिर् ज्योतिषाद्ध्यापकत्वेन पाठशालायान् नियुक्तो दृश्यत इति शरच्चन्द्रो भट्टराइः प्राह । नीलदेवः१९२६तमवैक्रमाब्दपर्यन्तन् जीवन् राजानम् भूमिर्य्, याचमानोऽवगम्यते इति तद्विचारका प्राहुः । नीलदेवेन न्यायकुसुमाञ्जलेष् टीका कृताऽऽसीदिति तस्य प्रनप्ता शङ्करदेवो वदति स्म । नीलदेवेनाऽष्टाद्ध्याय्या लक्ष्यनिर्देशिका टीका कृताऽऽसीदित्यन्ये कथयन्ति। किन्तु ते द्वे एव टीके न दृष्टिपथमागते स्तः। नीलदेवेन वाचस्पतिम् प्रति प्रहिते पत्रे लिखितोऽयं श्लोक इति दुर्गाप्रसादोऽधिकारी (कङ्काली) कथयति स्मेत्युक्त्वा टुकराजमिश्रेणैकश् श्लोकोऽस्मभ्यन् दत्तः । स च श्लोको "महाधनवं, वीक्ष्य महाधनाढ्यवं, विद्या न हेया विदुषा कदापि। वाराङ्गनानामवलोक्य वेषङ्किमार्यनार्यः कुलटा भवन्ति" इत्येवंरूपोऽस्ति । किन्तु स सुभाषितरत्नभाण्डागारस्याष्टमे संस्करणे दृश्येन "निरक्षरे वीक्ष्य महाधनत्वं, विद्याऽनवद्या विदुषा न हेया । रत्नावतंसाः कुलटास् समीक्ष्य किमार्यनार्यः कुलटा भवन्ति" इति श्लोकेन सदृश इति स नीलदेवेन रचितो नेति प्रतीयते । वाचस्पतिपन्तः १९४४तमे वैक्रमेऽब्दे खड्गसम्सेरजङ्गप्रसङ्गे नेपालदेशान् निर्वासितोऽभूदिति शङ्करदेवः प्रतिपादयति । वाचस्पतिपन्तेन रणोद्दीपसिंहप्रेरणया १९३०तमे वैक्रमेऽब्दे रचित एको "गीतायाः प्रक्षिप्तत्वोद्घोषणेनाऽऽत्मानमाख्यापयतो धिक्कारः"

इति निबन्धो वाचस्पतेर् नप्त्रा शङ्करदेवेन २०२९तमे वैक्रमेऽब्दे मुद्रापितो दृष्टिपथमागच्छति। किन्तु स मुद्रणजाऽशुद्धिबहुलतयाऽतीव दुष्पठो जातोऽस्ति। पूर्वोक्तन् निबन्धनामाऽपि अस्माभिः पूर्वापरविचारणेन संशोद्ध्योपस्थापितवं वर्तत इति बोद्ध्यम्। वाचस्पतिपन्तः १९४१तमे वैक्रमेऽब्दे सर्वप्रथमन् नैपालीयपञ्चाङ्गपत्रमुद्रापणव्यवस्थाञ् चकारेत्यपि वदन्ति।

## ८५. पतञ्जलिः (? – ?)

नैपाल–काष्ठमण्डपनगरनिकटवर्तिललितपुरनिवासी गर्गगोत्रो दैवज्ञसिंहक्षितिपालमान्यस्याऽरविन्दनाथस्य पुत्रः पण्डितः पतञ्जलिः खलु १९०८ तमे वैक्रमेऽब्दे सप्ताहपद्धतिं रचयामास। तदुक्तन् तदन्ते "**पन्नगाभ्रखगचन्द्रसम्मिते वैक्रमे सकलसङ्ग्रहादिय(मा ?)म्। सूक्ष्मतः खलु नगाहपद्धतिं सज्जनस्य च मुदेऽकरोद् द्विजः**" इति। एषा च पद्धतिः साङ्गसप्ताह–मण्डपपूजा–विधिरिति नाम्नाऽङ्किता १९९५तमे वैक्रमेऽब्दे वाराणस्याम् माधवप्रसादशर्मणा मुद्रापितोपलभ्यते।

## ८६. तारानिधिः [मणिरामः] पाण्डेयः (?–?)

कूर्माचलपरमाभिजनो नैपालत्रितुङ्गाचलमण्डलान्तर्गतचोकग्रामकृतनिवासो जयदेवपौत्रः कुलनिधिपुत्रस् तारानिधिः (मणिरामः) खलु पतिव्रताधर्मकथयन् धर्मशास्त्रप्रकरणग्रन्थम् १९१९तमे वैक्रमेऽब्दे (?) रचयामास। स च ग्रन्थः १९५२ तमे वैक्रमेऽब्दे नेपालदेशे पाशुपत-यन्त्रालये ग्रन्थकर्तुः पौत्रेण उमादेवेन मुद्रित उपलभ्यते। तस्य ग्रन्थस्याऽन्ते तारानिधिना स्वपित्रा कुलनिधिशर्मणा रचितानाङ् ग्रन्थानाञ् च नामान्युल्लिखितानि सन्ति। स्वरचितक्रमेन च छन्दःप्रकरणम्, शिवार्चनचन्द्रिका, ओषधिकल्पश्चेति ग्रन्थाश्चोल्लिखितास्सन्ति।

## ८७. रामचन्द्रो जोसिः (१८८५–१९६९ वै. ?)

नैपालकोटिमण्डलान्तर्गततिलाडिग्रामाभिजनः काष्ठमण्डपनगरान्तर्गतयट्खाटोललकनिवासी ईश्वरीदत्तपुत्रो पानमतीकुक्षिजो गर्गगोत्रो रामचन्द्रो जोसिः पशुपतिस्तोत्रङ् गुह्यकालिस्तुतिञ् च रचयामास। तद्द्वयं सहैकपुस्तकतया १९६४तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते। तत्र व्याकरणसम्बद्धा महत्त्वपूर्णाष् टिप्पण्योऽपि स्थानेस्थाने दृश्यन्ते। तस्य षोडशश्लोकात्मकं स्वस्थानिकास्तोत्रमपि नेपालनगरे १९५२तमे वैक्रमेऽब्दे

मुद्रितमुपलभ्यते । तदन्ते "इति श्रीस्कन्दपुराणान्तर्गतकेदारखण्डोक्त-स्वस्थानिकाकथाप्रकाशिकायाम् जोसीत्युपनामकरामचन्द्रकोट्यालकृतौ द्वादश-सर्गोक्तं स्वस्थानिकास्तोत्रं सम्पूर्णतामगात्" इत्युल्लिखितम् दृश्यते । एतेन रामचन्द्रेण स्वस्थानिकाकथाप्रकाशिकाऽपि रचितेति प्रतीयते ।

## ८८. छविलालस् सूरिर् ढुङ्ग्यालः (१८९६–१९६३ वै.)

नेपाल–रामेछापमण्डलाभिजनः काष्ठमण्डपनगरनिवासी दीनानाथ-पौत्रो देवीप्रसादपुत्रः काश्यामधीतवान् छविलाल उपाध्यायो ढुङ्ग्यालस् सूरिः १९४९ तमे वैक्रमेऽब्दे सुन्दरचरितम् नाम सप्ताङ्कम् नाटकम्, यथा-कालम् कुशलवोदयम् नामाऽष्टाङ्कम् नाटकम्, वृत्तालङ्कारम्, विरक्तितरङ्-गिणीशतकम् च रचयामास, मुद्रापयित्वा विद्वद्भ्यो निश्शुल्कम् विततार च किल । तत्र सुन्दरचरिते रामायण-सुन्दरकाण्डकथावस्तु, कुशलवोदये सीता-परित्यागादिकमुत्तररामचरितमुपस्थापितमस्ति । वृत्तालङ्कारे एकैकम् पद्यम् अलङ्कारविशेषस्य वृत्तविशेषस्य चोदाहरणतया मनोहरतया रचितम् दृश्यते। छविलालकृतास् समस्यापूर्तयोऽन्ये च मुक्तकश्लोकास् सूक्तिसुधायाम् मुद्रिता दृश्यन्ते इति तदन्वेषका आहुः । छविलालसूरिणा **"विज्ञानकेसरिकृतीन्द्र-मुखोद्गतानि वागर्णवाच्छसलिलानि जयन्ति लोके । आपो यथा गिरिणदस्य मम प्रलापास् सम्प्राप्य येषु समला विमला अभूवन्"** इति स्तुतेन विज्ञानकेसरिणा विमलीकृतेषु हरिनाथशर्मणा पुनरवलोकिते-ष्वपि छविलालकृतेषु ^ग्रन्थेषु^ कुत्र चित् भाषिकाशुद्धयो दृश्यन्ते । भवति हि गच्छताम् क्वापि स्खलनम् । अत एव छविलालसूरिः प्रार्थयते स्म **"दोषज्ञा शोधयन्त्वेतद् यत्नयत्नास्त्यसङ्गतम्। प्राञ्जलिः प्रार्थये वोऽहम् भवतः करुणादृशः"** इति । काव्यदृष्ट्या तु तदीयाः कृतयो मनोहारिण्य एव सन्ति । तत्र सुन्दरचरितस्य प्रस्तावनायामागतं स्वभावोक्तिप्रधानं शरद्वर्णन-परम् **"निशान्तश् शान्तोऽसौ जहति न सरस् श्वेतगरुतस् सरोनीरं स्वच्छम् विदधति सदा शीतमरुतः । हिमांशुर् लोकानाम् परिहरति तापम् च विविधम् तथाऽपूर्वम् तोषम् जनयति जनानां शरदियम्"** इति पद्यं स्थालीपुलाकन्यायेनोदाहर्तुं शक्यम् दृश्यते ।

## ८९. मनोहरशर्मा झाः (१९०७–१९८७ वै. ?)

नेपाल–महोत्तरि–मण्डलान्तर्गत–सांढा–ग्रामनिवासी मनोहरशर्मा झाः

कूटदर्पणव्याख्याम् प्रभाख्याञ् चकार किल । सा च व्याख्या मुद्रितोपलभ्यते । तेन रचिताश् शौचाशौचविवेकादयोऽन्येऽपि ग्रन्थास् सन्तीति श्रूयते ।

## ९०. हरिनाथः प्याकुर्‍यालः (१९०९–१९८६ वै.)

नेपाल–काभ्रेमण्डलान्तर्गत-कुलबारिग्रामाभिजनः कृतसङ्खुनिवासः काष्ठमण्डपनगरान्तर्गत-ठमेलटोल्लकनिवासी नीलकण्ठपौत्रो लोकनाथपुत्रो कनकरेखागर्भजो धनकुमारीद्वितीयो हरिनाथशर्मा प्याकुर्‍यालोऽन्वर्थनामकं सङ्कल्परत्नावल्याख्यङ्कर्मकाण्डग्रन्थञ् चकार किल। सोऽयङ्ग्रन्थः प्रचलित-चण्डी-रुद्रीपाठ–दान–श्राद्ध–पूजा–ग्रहमन्त्रजपादि–कर्मकाण्ड-संलग्नानाञ् जनानाङ्कृते उपयोगी दृश्यते । प्रथमम् १९८० तमे वैक्रमेऽब्दे लखनौनगरे मुद्रितोऽयङ्ग्रन्थः २०४०तमे वैक्रमेऽब्दे पुनर्मुद्रित उपलभ्यते । हरिनाथ-शर्मणा स्वहस्ताक्षरैर् लिखिता वाजसनेयिनित्यतर्पणपद्धत्यादिका बह्व्यः पद्धतयस् तद्वंशधरगृहे सुरक्षिता अवगम्यन्ते ।

## ९१. त्रिपुरानाथः (?–?)

नेपालनिलयोऽविज्ञायमानकुलाभिजनविशेषस् त्रिपुरानाथो नाम कश्चन पण्डितपुङ्गवश् शालग्रामपरीक्षाख्यङ्ग्रन्थं सञ्जग्राह किल । स च ग्रन्थः १९५५तमे वैक्रमेऽब्दे मुद्रितो रमानाथप्याकुर्‍यालकृतभूमिका-सहित उपलभ्यते ।

## ९२. प्रयागदत्तः पण्डितः (१९११–१९८० वै. )

नेपाल–त्रिशुङ्गाचलमण्डलाभिजनः काष्ठमण्डपनगरनिवासी हरिवंश-पण्डितपुत्रः श्रीधरपण्डितशिष्यो रङ्गनाथ-गोपीनाथयोः पिता राजकीय-मुख्य-पुरोहितम् प्रयागराजं समाश्रितो राजपुरोहितः प्रयागदत्तः पण्डितः खलु शिक्षारत्नन् नाम वेदान्तप्रकरणग्रन्थम् प्रणिनाय किल । स च ग्रन्थोऽमुद्रित एव तत्पौत्रादिगृहे लुठति । तस्य ग्रन्थस्याऽष्ट पद्यानि संस्कृतसंस्कृतेर् द्वितीयेऽङ्के मुद्रितानि सन्ति । तत्र ग्रन्थकारस् स्वरचितग्रन्थस्य महत्त्वन् ध्वनयन् वदति-"दृष्ट्वा निर्माणमेतन् मम परमपदप्राप्तिकामो जनोऽयं शास्त्राण्यन्यान्यपश्यन्नपि परमपदप्राप्तये स्यात् समर्थः । न्यक्कृत्यान्यान् प्रतिष्ठां सदसि बहुवराम् प्राप्य यो वै धनाढ्यान्



वैयाकरणः कौण्डिन्न्यगोत्रो हरिनाथशर्मा प्याकुर्‍यालः

(१९०९ - १९८६ वैं.)

( हरिनाथशर्मपौत्रप्रीतिनाथप्याकुर्‍यालदत्तातिरिक्तद्रव्यसाहाय्येन प्रकाशितम् छायाचित्रम् )

कुर्वन् स्वाभीष्टदातृन् व्यवहृतिनिपुणोऽन्यानि शास्त्राणि पश्येत्"
इति ।

## ९३. विश्वनाथ आचार्यः (१९१४-१९८६ वै.)

नैपाल–त्रिशूलगाचलमण्डलान्तर्गततामकूटग्रामनिवासी सूर्योपाध्यायात् त्रयोदशो नैपालीयभाषाऽऽदिमहाकविभानुभक्तप्रकथापिते **श्रीकृष्णाचार्यकुले** जातश् श्रीकृष्णाचार्याच् चतुर्थश् शेखरापराभिधपद्मनाभपौत्रो देवदत्तपुत्रः पद्माकुक्षिजो व्यावहारिक–ज्योतिष-धर्मशास्त्र–पाणिनीयव्याकरण–कथापुराण–कर्मकाण्डनिपुणः कविर् विश्वनाथ आचार्यः कृषिप्रधानायाव् वृत्तौ व्याप्रियमाणोऽपि अध्यापनपरायणस् समयेसमये आत्मना रचितानां संस्कृतपद्यानामेकाम् पुटिकां सञ्जग्राह किल । किन्तु सा पुटिका नाऽस्माकन् दृष्टिपथमागता । तत्र सङ्गृहीतानि कति चन पद्यानि मौखपरम्परया प्रासङ्गिकलेखपरम्परया चाऽऽगतानि प्राप्यन्ते । तानि च पण्डितकविराज-नरनाथाचार्यकृते भानुभक्ताचार्यजीवनचरित्रे, 'नेपाली' इत्याख्यायाम् पत्रिकायाञ् चतुश्चत्वारिंशत्तमेऽङ्के, भानुदर्शनपत्रिकायान् द्वितीयेऽङ्के च मुद्रितानि उपलभ्यन्ते । तेषु धर्मविषयकञ् "**गिरिशस्स्मरणादिषु प्रभग्नव् वहते शोकभरन् न याति शान्तिम् । विधिना नरगात्रगोत्रपाते निहितम् मानसमेव वज्रमेतत्**" इति पद्यम्, प्रोषितभर्तृकाविषयन् "**दरी नाऽयञ् कुक्षिश् शिखरयुगलन् नाऽसयुगलव् झरी नाऽश्रुव्रातो भुजयुगमिदन् न द्रुमयुगम् । भृगुर् नेदम् पृष्ठञ् गतवति सुमार्गं प्रियतमे मनोवज्र त्वम् माञ् खलु गिरिधिया दार्यसि किम्**" इति पद्यञ् च विशेषतो मनोहरन् दृश्यते । उक्तायास् स्वविरचितमुक्तकादिसङ्ग्रहपुटिकाया अन्ते च "**विद्वद्देशश्येन निर्णीता रम्या शास्त्रकथा किल । बालेनाऽस्फुटवाक्येन प्रोक्ता वाणी मनोहरा ॥ करावलम्बञ् कुरुतेऽनुकम्प्य विलोक्य गन्तुः स्खलितम् महात्मा । धूर्तस् तु पाणिप्रतलौ प्रताड्य विहस्य गाढं रमते दुरात्मा**" इत्युल्लिखितन् तत्रभवतेति च मौखपरम्परया ज्ञायते ।

## ९४. खड्गपाणिः अर्ज्यालः (१९१६–२००२)

नैपालगोर्खामण्डलाभिजनः काष्ठमण्डपनगरान्तर्गतटेङ्गलटोलकनिवासी जानकीदत्तपुत्रो महामायागर्भजः खड्गपाणिरर्ज्यालः कृत्यवाटिकाख्यन् तिथिकृत्यप्रतिपादनपरम् पौराणधर्मशास्त्रनिबन्धम् चकार किल । तत्र

विशेषतो नेपालदेशे प्रचलितानि कृत्यानि निरूपितानि दृश्यन्ते । स च निबन्धग्रन्थः २०३३तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते ।

## ९५. जयदेवसूरिः [पन्तः] (१९१६–१९७५ वै. ?)

नैपाल–पाल्पामण्डलाभिजनः काष्ठमण्डपनगरनिवासी नीलदेवपौत्रो वाचस्पति-ज्येष्ठपुत्त्रो जयदेवः पन्तस् सविवृतिकैस् सप्तचत्वारिंशता श्लोकैर् युताङ् कारककलिकाम्, सविवृतिकैः पञ्चत्रिंशता श्लोकैर् युतां समासकलिकाञ् च रचयामास किल । तौ द्वावेव ग्रन्थौ पृथक्पुस्तकतयैव कल्याणनगर्याँ लक्ष्मीवेङ्कटेश्वरमुद्रणालये १९६२तमे वैक्रमेऽब्दे मुद्रितौ श्रीयुतपण्डित-जयदेवशर्मणा प्रकाशितावुपलभ्येते । तत्र नेपालदेशस्य पन्तकुलस्य वाऽप्युल्लेखो नैव दृश्यते । ग्रन्थादौ "गुरुवं वाचस्पतिन् नत्वा बालानाव् विदुषाम् मुदे । जयदेवो वितनुते कलिकाङ् कारकस्य च" इति वाचस्पतेरुल्लेखोऽस्ति । तत्र "इति श्रीजयदेवशर्मसूरिविरचितायां शब्दतत्त्वकलिकाख्यायाङ् कारककलिकाख्यो गुच्छः प्रथमः" इति गुच्छसमाप्ति-वाक्य-दर्शनाज् जयदेवसूरिणा शब्दतत्त्वकलिकाख्यो ग्रन्थो विरचितः, तस्यैवैते द्वे प्रकरणे इति ज्ञायते । द्वयोरेव गुच्छयोरन्ते मुद्रितयोस् सदृशयोस् समाप्ति-वाक्ययोः काऽपि न्यूनता वाऽसङ्गतिर्वाऽपि च प्रतीयते ।

## ९६. क्षमादेवः पाँडेः (?–?)

नैपाल–पाल्पामण्डलाभिजनः काष्ठमण्डपनगरनिवासी नागेश्वरस्य दौहित्त्रो विजयराजभागिनेयो नगेन्द्रराजशिष्यः कुलनिधेः प्रनप्ता मणिरामस्य नप्ता श्रीलालरत्नाकरपुत्त्रः क्षमादेवः पाँडेः पृथ्वीवीरविक्रम-चन्द्रसम्सेरजङ्ग-समये हरिवंशकथासूत्त्रप्रकाशिनीं रचयामास किल । तस्येयङ् कृतिः १९६८-तमे वैक्रमेऽब्दे मुद्रितोपलभ्यते ।

## ९७. डिल्लिसम्सेरवर्मा [थापाः] (? – ?)

नैपाल–दाप्चाग्रामाभिजनः काष्ठमण्डपनगरनिवासी हेमदलपौत्त्रः केसरसिंहपुत्त्रो डिल्लिसम्सेरवर्मा खलु चन्द्रसम्सेरपेरिसयात्त्रा–विषयकय् यूरोपयात्त्रा–प्यारीसकाण्डन् नाम लघुङ् गद्यग्रन्थं रचयामास किल । तत्र प्रारम्भे "अनभ्यासाद् धतप्राया प्रतिभाकल्पनोज्झिता । अलङ्कारैर् विहीना विद्या मे गमिष्यत्युपहास्यताम्" इत्यादीनि पद्यानि च

मनोहराण्येव दृश्यन्ते । एष ग्रन्थो मुद्रणसमयाङ्कनरहितो नैपाल–नक्साल-भगवतीमुद्रणालये मुद्रित उपलभ्यते । डिल्लिसम्सेरस् थापास् संस्कृतम् आङ्गलभाषाञ्च रम्यरूपतया जानीते स्म, संस्कृताङ्गिरम् आङ्गलभाषाञ्च सुष्ठु व्याहरति स्म चेति उल्लेखो 'भएका कुरा' इति नैपालीयभाषाग्रन्थे काशिनाथदीक्षिताचार्यकृते ८४ तमे पृष्ठे दृश्यते ।

## ९८. सदाशिवो दीक्षिताचार्यः (१९२४–१९७५ वै.?)

नैपाल–काष्ठमण्डपनगरसमीपस्थमुडिखुग्रामाभिजनः काष्ठमण्डप-नगरस्थ–धँरिधारा–टोलकनिवासी शिरोमणि-दीक्षिताचार्यपुत्रस् सदाशिवो दीक्षिताचार्यः खलु १९५९तमे वैक्रमेऽब्दे नेपालदेशनिवासि–पण्डितवर-श्रीमदाचार्यशिरोमणिदीक्षित-साग्निचित्सर्वपृष्ठाप्तोर्यामयाजि-जीवनवृत्तान्त-रूपार्वं विशेषवृत्तसहिताभाचार्यवंशावलीं रचयामास किल । सा च १९५९ तमे वैक्रमेऽब्दे मुद्रितोपलभ्यते । तस्या मुखपृष्ठे "आचार्यसदाशिव-दीक्षितेनोपनिबद्धा" इत्युल्लिखितन् दृश्यते । ग्रन्थान्ते तु "अब्दन् तातपदैकतानमनसौ संस्मृत्य सर्वन् चिरात् काशीनाथ-(१९२२–१९९४ वै.) सदाशिवौ प्रियतमौ भक्तौ सुतौ सुस्वनः । श्रीगङ्गाधर-शास्त्रिनिश्छलसुहृत्साहाय्यसिद्धोद्यमौ ग्रथ्नीतस् स्म विशेषवृत्त-सहिताभाचार्यवंशावलिम्" इत्युक्तम् प्राप्यते। ग्रन्थकारस्याऽऽङ्गलवशवं्वद-राणाकुलाश्रितत्वाद् एतस्मिन् ग्रन्थे आङ्गलकानां राणकानाञ्च प्रशंसा स्थाने-स्थाने दृश्यते । तथापि श्रौतयज्ञपरिचयम् प्राप्तुमिच्छुकानाङ्कृते केनाऽप्यंशेन त्रुट्या युताऽपि शोभना सामग्री सुललितानि वर्णनानि चाऽत्र प्राप्यन्ते ।

## ९९. गिरीशवल्लभो जोसिः (१९२४–१९८०)

नैपाल–काष्ठमण्डपनगरान्तर्गत–चाबेलटोलकनिवासी लक्ष्मीवल्लभ-पौत्रो गङ्गानाथपुत्रो गिरीशवल्लभः खलु संस्कृतभाषायाम् पातञ्जल-योगसूत्रस्य व्याख्यां रचयामास किल । तेन विविधानि स्तोत्राण्यपि रचितान्यभूवन्निति शरच्चन्द्रभट्टराइप्रभृतयो वदन्ति ।

## १००. उमानाथः अर्ज्यालः (१९२७*–?)

नैपाल–काष्ठमण्डपनगराभिजनः काशिवासी नारायणदासार्ज्यालपुत्र-

---

* उमानाथजन्मवर्षस्येयं सूचना ज्यौतिषिकप्रेमसागरदवाडिपुत्त्राद्दुपलब्धेति शरच्चन्द्रभट्टराइमहाभागेनाऽस्मभ्यन् दत्ता ।

विष्णुदासवंशजो रामनाथपौत्रो ब्रह्मदत्तपुत्र उमानाथोऽर्ज्यालो नव्यन्याय-ग्रन्थेषु जागदीशपञ्चलक्षण्यादिषु बहुषु विवृतीश्चकार किल। तथैव नव्य-व्याकरणग्रन्थेषु लघुशब्देन्दुशेखरादिषु च विवृतीश्चकार। शब्दानामनेकेषा-मर्थानाम् परिकल्पने व्यसनी प्रथम् पण्डितः 'अथ प्रजानाम्' इत्यादेश् श्लोकस्य त्रिषष्टिम् अर्थान् प्रदर्शयामास किल। एतेन रचितेषु वामननाम-कौमुद्द्याःपृष्ठभागे उल्लिखितेषु चतुर्विंशतौ ग्रन्थेषु माथुरपञ्चलक्षणीविवृतिः, वामननामकौमुदी, गोपीगीतार्थकौमुदी चेति त्रयो ग्रन्था मुद्रिता उपलभ्यन्ते। एतद्वंशधराः काष्ठमण्डपनगरे वर्तन्ते।

## १०१. श्रीकान्तो घिमिरेः (१९२८–२०११ वै.)

नैपाल–रामेछापमण्डलान्तर्गताऽचंलेग्रामनिवासी मोहनलालपौत्रः पशुपतिनाथपुत्रो मनमायाकुक्षिजो देवीप्रसाद-टीकारामदाहाल-वासुदेवशास्त्रि-शिरोमणिदीक्षिताचार्य–शिवकुमारशास्त्रि-तात्याशास्त्रि–गङ्गाधरशास्त्र्यादि-शिष्यश् श्रीकान्तो घिमिरेः खलु त्रिशच्छ्लोक्यास् संस्कृतव्याख्यान् चकार किल। एतस्या हस्तलेखस्य छायाप्रतिलिपिस् सोमनाथघिमिरेमहाशयेन दत्ताऽस्माकं सङ्ग्रहेऽस्ति। किन्तु तत्र पुस्तकमुखपृष्ठे पुस्तकपृष्ठभागे च "पं. घिमिरोपनामकश्रीकान्त उपाध्यायस्य" इत्येवंरूप उल्लेखः प्राप्यते, ग्रन्थादौ ग्रन्थान्ते वा व्याख्याकारनामाद्युल्लेखस्तु न दृश्यते। उपर्युक्त-प्रकारक उल्लेखश् श्रीकान्तस्य ग्रन्थकारत्वम् पुस्तकस्वामित्वं वा किं व्यनक्तीति विद्वांसो विदाङ्कुर्वन्तु। सोमनाथमहाशयस्तु अन्येषु व्याख्या-नेषु अप्राप्यं विशेषं समावेश्येदं व्याख्यानम् मया कृतमिति मम पिता वदति स्मेति, एतादृशा व्याख्यानग्रन्था मत्पितृकृता अन्येऽपि सन्तीति च ब्रवीति। स्वरचिते प्रकाशिते श्रीकान्तचरिते तु तेन श्रीकान्तकृतीनाङ्कोऽ-प्युल्लेखो नैव कृतोऽस्ति। तज्जीवनचरितम् २०१५तमे वैक्रमेऽब्दे मुद्रिते आशीचविज्ञाने प्रकाशितमस्ति।

## १०२. भुवनेश्वरप्रसादः पण्डितः (१९३०–२००७)

नैपाल–काष्ठमण्डपनगरान्तर्गतज्ञानेश्वरटोल्लकनिवासी गौरीश्वरात् सप्तमो नारायणपुत्रवेणीप्रसादप्रनप्ता तीर्थराजनप्ता वामदेवपुत्रो दामोदर-शास्त्रिनारदद्वाजादिशिष्यो भुवनेश्वरप्रसादः पण्डितः (पाँडेः) खलु वीरसम्सेरजङ्गराणाकीर्तिवर्णनाम् चित्रकाव्यरूपां रचयामास। सा च १९५५-

तमे वैक्रमेऽब्दे मुद्रितोपलभ्यते । तत्रभवता देवसम्सेरविषयेऽप्येतादृशी रचना कृताऽभूत् साऽपि प्रकाशिताप्यभूत् किन्तु साऽस्माकं गृहेषु इदानीम् नैवोपलब्धा इति, तत्रभवतः प्रौढतमा रचना तु जुद्धशतकमित्याख्याऽऽसीत्, तत्र पूर्णप्रसादब्राह्मणस्याऽपूर्णा व्याख्याऽप्यासीत्, किन्तु साऽपीदानीमस्माकं गृहेषु नैवोपलब्धा' इति च भुवनेश्वरप्रसाद-सुतः काशीश्वरप्रसादमहोदयः कथयति ।

## १०३. करुणाकरः (? – ?)

नैपाल-पश्चिमप्रान्तस्थ-"धौलकाँडा–तल्लोबोगटान"–नामकग्रामाऽभिजनः करुणाकरो दशकर्मादिपद्धतिं सञ्जग्राह किल । सा च पद्धतिर् मुद्रिताऽवगम्यते ।

## १०४. कुलचन्द्रो गौतमः (१९३४–२०१५ वै.)

नैपाल–धादिङमण्डलान्तर्गत–जीवनपुरग्रामाभिजनो रमाकान्तपुत्रो रामशास्त्रितैलङ्गशिष्यो रामभण्यनुगृहीतः किल कुलचन्द्रो गौतमो भिक्टोरियाया मरणे शोकमहोर्मिं रचयामास । एषा कुलचन्द्रस्य प्रथमा संस्कृतरचना दृश्यते । एषा च १९५७तमे वैक्रमेऽब्दे विश्वराजहरिहरशर्मभ्याम् मुद्रापयित्वाऽमूल्यवं वितीर्णाऽवगम्यते । तदनन्तरलं लकारार्थबोधनपरं कृष्णकर्णाभरणकाव्यम् (१९७५), स्तवकाव्यरूपां हरिवरिवस्याम्, भागवतसङ्क्षिप्तार्थप्रदर्शनपरां क्षेमेन्द्रीयभारतमञ्जर्यनुकारिणीम् भागवतमञ्जरीम् (१९८४)धर्मप्रतिकूललोकचरित्रचित्रणपराम् प्रपञ्चचर्चाम् (१९९३), अमरकोशपरिशेषम् (१९९२), जनकराजपण्डितपत्नीवियोगविषयाम् प्रेमपञ्चपञ्चाशिकाम् (१९९५), रामकृष्णचरित्रकीर्तनपरवं वन्दनायुगलम् (२००५) च कुलचन्द्रो यथासमयं रचयामास किल । हरिवरिवस्याप्राभातिकोल्लासान्तर्गतो गङ्गागौरवस्तवश् च १९९२ तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते । काशीविद्वत्परिषत्सभापत्यादीनां ग्रन्थप्रकाशनसम्मतिपत्रेण सहितम् आदर्शदम्पती सीतारामौ इत्याख्यं कुलचन्द्रकृतलं लघुकाव्यम् च २०१२ तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते । कुलचन्द्रेण चण्डी-रुद्रीप्रयोगविधिरचनापूर्वकं गौरीशङ्करगुटिका सम्पादितेति च श्रूयते । विवाहपद्धतिस् तु तेन सम्पादिता दृश्यते च । जुद्धसम्सेरकृतस्वर्णतुलादानप्रसङ्गे जुद्धसम्सेरप्रशंसायामपि तेन वाणी

व्यापारिताऽवगम्यते । कुलचन्द्रेण रचितः "काशिकराजकीयसंस्कृतमहाविद्यालयः" इति पद्यात्मको लेखस् शारस्वतसुषमायाम् प्रथमे वर्षे प्रथमेऽङ्के प्रकाशितो दृश्यते । तत्र पञ्चचत्वारिंशदुत्तरैकोनविंशतिशततमवैक्रमाब्दात् प्रभृति पञ्चसप्तत्युरैकोनविंशतिशततमवैक्रमाब्दयं यावत् काशिकराजकीयसंस्कृतमहाविद्यालयेऽध्यक्षपदे वर्तमानस्य आर्थर–बेनिसस्य प्रशंसया पूर्णानि "माद्ध्वीकवं विनिगृह्णतेव वचसा योऽन्वग्रहीत् सङ्गतानौदार्यात् कृतकर्मणामपि मनो नृणामहार्याञ्च यः । आर्थर्-बेनिसनामधेयमतुलप्रज्ञन् तमद्ध्यक्षता–भाजङ्कश् चिरमीक्षितं स्थिरमतिर् विस्मर्तुमीष्टे जनः ॥८॥ आकारे मृदुता मतौ प्रखरता माने समुत्तुङ्गता ज्ञाने निर्भरता मनस्यमलता वाचि व्यथाहारिता । सङ्ख्यावन्तमसङ्ख्यसद्गुणगणन् तम् बेनिसाख्यवं विना नैकत्रैक्षि जनेन केन चिदपि क्षोणीतले भ्राम्यता ॥९॥ नानालङ्कृतिमञ्जुलन् ध्वनियुतैस् तैस्तैर् गुणैस् सम्मतयं येन प्राञ्जलमन्ववादि सकलवं वाल्मीकिरामायणम् । तेनैवाऽखिलसंस्कृताङ्लविदुषान् धन्यान् धियन् धिन्वता विद्वत्ता–गुणिता–गुणग्रहिलता अस्स्य प्रमाणीकृताः ॥१०॥" इति पद्यानि दृश्यन्ते । कुलचन्द्रेणाऽमरकोशटीकायाः प्रथमे संस्करणे (१६५८तमे वैक्रमेऽब्दे) "गौताम्योपाभिधकुलचन्द्रशर्मणा भाषाटीकया संस्कृतः" इति स्वोपनामप्रयोगो "गौताम्य" इति कृतो दृश्यते । ऋत्विग्गणान्तर्गतानाङ्गौताम्यानाम् अङ्गिरोगणान्तर्गतगौतमवंशजत्वभ्रमजनकतया गौतमोपनाम्ना व्यवहारोऽविचारितरमणीयो गताऽनुगतिकतया प्रचलन् विसंस्थुलस् समीकरणीयः प्रतीयते । कुलचन्द्राय राजा त्रिभुवनस् स्वेच्छया २००८तमे वैक्रमेऽब्दे 'विद्वच्छिरोमणिः' इत्युपाधिन् ददौ किल । स्वत्स्य विविधकाव्यरचनापटुत्वन् तु कुलचन्द्रेण प्रमाणीकृतन् दृश्यते, तेन कृतायाममरकोशटीकायावं[1] विवाहपद्धतौ चाऽनेकेषान् दोषाणामुपलभ्यमानत्वाद् विद्वत्त्वन् तु तस्य समीक्षणीयमेव प्रतीयते ।

---

1. काठमण्डपस्थस्य वाल्मीकिविद्यापीठस्य पत्रिकाया मर्यादाख्यायास् सप्तदशे पूर्णाङ्के प्रकाशितः "अमरकोशका ब्रह्मवर्गमा र तेसका कुलचन्द्रकृत टीकामा वर्तमान केइ आलोच्य विषयहरु" इति निबन्धो द्रष्टव्यः ।

## १०५. हेमराजशर्मा (१९३५–२०१० वै.)

नेपाल–काष्ठमण्डपनगरनिवासी गौरीश्वरादष्टमो नारायणपुत्र-नागेश्वरसुतविजयराजप्रनप्ता नगेन्द्रराजनप्ता लोकराजमद्ध्यमपुत्रो राजकुलमाश्रितो हेमराजशर्मा [पंडि:] पण्डितानामाङ्लभाषाविदाम् च साहाय्येन द्वैतीयिककक्षाया अनुसन्धानकार्यञ्च कृत्वा प्रमेयबहुलम् भारतवर्षीयभैषज्य-परम्परायास् स्वातन्त्र्यस्य समीचीनत्वस्य च प्रदर्शकम् महाकायमुपोद्घातं रचयित्वा तं सयं योज्य वृद्धजीवकीयतन्त्रापरनामधेयायाः काश्यपसंहितायास् सम्पादनञ्च कृत्वा ताम् मुद्रापयामास । स 'महाभारतसम्बन्धे कश्चन विचारः' इति निबन्धञ्च स्वनाम्ना कस्मिंश्चन भारतीयानुसन्धानपत्रे प्रकाशयामास किल । किन्त्वयम् निबन्धो नाऽस्माकम् दृष्टिगोचरीभूतः । हेमराजाय १९९२तमे वैक्रमेऽब्दे राजा त्रिभुवनो "विद्वच्छिरोमणिः" इत्युपाधिम् प्रददौ किल । किन्तु नेपालीयभाषाव्याकरणविषये यास्क-पाणिनि-कात्यायन–पतञ्जलि-वररुचि-भर्तृहरि-नागेशप्रभृतिभिराविष्कृतम् परिष्कृतम् व्याख्यातञ्च चाऽऽर्षं शाश्वतम् भाषाव्याकरणसिद्धान्तमूलतत्त्वम् परित्यज्य पाश्चात्यानुयायि–हिन्दि-बङ्गालि-मराठि-गुजराति-व्याकरणकारगताऽनुगतिकतावलम्बनञ्च कर्तुम् निस्सङ्कोचम् प्रवृत्तस्य[2] संस्कृतभाषा-नेपालीय-भाषा-वर्णमालाया ज्ञानेऽपि स्थूलान् त्रुटिञ्च कृतवतोऽस्य विद्वच्छिरोमणित्वम् वैदिकर्षिकुलर्जैर् विवेचकैः पर्यालोचनीयम् प्रतीयते । काश्यपसंहितोपोद्घाते दृश्यान् दोषानपि[3] द्रष्टुं शक्नुवद्भिर् दोषज्ञैर्प्यस्य विद्वच्छिरोमणित्वस्य तत्त्वम् बोद्धुं शक्यम् दृश्यते ।

## १०६. वेदनाथो लामिछाने: (१९३५–२०१८ वै.? )

नेपाल–गोरक्षाचलमण्डलान्तर्गतधावाग्रामाभिजनो धादिङमण्डला-

---

२. एतद्विषयकम् विस्तृतम् प्रतिपादनम् 'जिम्दो नेपालि भासा (पैलो खण्ड)' इति नेपालीयभाषाग्रन्थे ३७–६५ पृष्ठेषु, 'जिम्दो नेपालि भासा (दोस्रो खण्ड)' इति ग्रन्थे २०९–२२३ पृष्ठेषु च दृश्यम् ।

३. हेमराजस्य वर्णमालाज्ञाने दृश्यमानास्त्रुटयः काश्यपसंहितोपोद्घाते दृश्यमानाः केचन दोषाश्च "जिम्दो नेपालि भासा (दोस्रो खण्ड)" इत्याख्ये नेपालीयभाषाग्रन्थे २१५–२३१ इत्यङ्कितेषु पृष्ठेषु पर्यालोचितास् सन्ति ।

न्तर्गताऽचानेग्रामनिवासी मङ्गलशर्मणो नप्ता विमानपण्डितत्वेन प्रसिद्धस्य अच्युतानन्तस्य पुत्रो विष्णुहरेश् शिष्यो वेदनाथो लामिछाने: १९९८तमे वैक्रमेऽब्दे अग्निस्थापनमन्त्रार्थदीपिकाम् पूर्णाङ्क कृत्वा मुद्रापयित्वा प्रकाशयामास किल । एतेन रचितो ध्वनिप्रकाशाख्य: पाणिनीय–वर्णसमाम्नाय-सूत्रव्याख्याग्रन्थोऽपि वाराणसेय–संस्कृतविश्वविद्यालय–वेदान्तविभागाऽध्यक्ष-पण्डितश्रीरघुनाथशर्मसम्मतिसहितो मुद्रितो दृश्यते । मुद्रणसमयस्तु तत्राऽङ्कितो नाऽस्ति ।

## १०७. करुणाकर: पनेरु: (१९३८–२०१८ वै. ?)

नेपाल–डडेल्धुरामण्डलान्तर्गतकैलिपालमाण्डुग्रामन्त.पाति–जंसेरा-ग्रामटिकाभिजनो वाराणसीनिवासी कमलनयनपौत्रो रघुनाथपुत्र: करुणाकर: पनेरु: कर्मकाण्डप्रदीपं रचयामास किल । ‘स च ग्रन्थ: २००८तमे वैक्रमेऽब्दे मुद्रितोऽभूत्, स एव ग्रन्थ इदानीम् जनार्दनपाण्डेयकृतित्वेन मुद्रितोऽस्ति’ इति करुणाकरभ्रातुष्पुत्रत्वेनात्मानम् परिचाययन् मोतिराम: पनेरु: कथयति ।

## १०८. दधिरामशर्मा मरासिनि: (१९३९–२०२० वै.)

नेपाल–गुल्मिमण्डलान्तर्गताऽर्घोणमण्डलस्थवामरुकग्रामाऽभिजनस् साम्प्रतिकाऽर्घाखाँचिमण्डलान्तर्गतखिदिमग्रामनिवासी मणिरामपौत्र: परिक्षित्पुत्रो दधिरामो मरासिनिस् सप्तसर्गात्मकं श्रीरामचरितामृतम्,सप्तसर्गात्मकमेव श्रीकृष्णचरितामृतम्, गणेशवैभवम्, अपरोक्षानुभूतिम् च रचयामास किल । तथैव स गण्डकीस्तोत्रादीनि नवदशानि स्तोत्राण्यपि चकार किल । तत्र सगणेशगौरवापरोक्षानुभूतिकं श्रीरामचरितामृतम् १९८५तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते ।

## १०९. सोमनाथशर्मा सिग्देल: (१९४१–२०२९ वै.)

नेपाल–काष्ठमण्डपनगरसमीपवर्तिथाङ्कोटग्रामाभिजन: काष्ठमण्डपनगरनिवासी उपराजगुरु–हेमराजाऽनुगृहीतो मुक्तिनाथनप्ता जगन्नाथपुत्रस् सोमनाथशर्मा सिग्देल: खलु संस्कृतचन्द्रिकाऽनुवादचन्द्रिकादीन् ग्रन्थान्, आदर्शराघवपुष्पाञ्जलि स्तवकाव्यम्, भट्टोजिदीक्षितकृतिप्रतिसंस्कारात्मिकाम् प्रतिसंस्कृतसिद्धान्तकौमुदीम् च विरचयामास किल । तत्र सोमनाथ-

कृतञ्च काव्यमाहार्यालङ्कारभारावनतन् नाऽतिसरसमपि साधारणजनमनोहरणक्षमन् दृश्यते । प्रतिसंस्कृतसिद्धान्तकौमुदी च परित्यक्तवैदिकप्रयोगविषय–स्वरविषया पाणिनीयवँ व्याकरणवँ विकलतयोपस्थापयन्ती अन्यविविधोपयोगि-विषयसङ्ग्रहयुताऽपि अशुद्धिबहुला साधारणानाम् जनानामप्रयोज्या दुष्टांशम् परिहृत्य विद्वद्भिस् सावधानतयोपयोज्या दृश्यते । यथा भट्टोजिदीक्षितशिष्या भट्टोजिदोषपरिमार्जनेन सिद्धान्तकौमुदीं समुज्ज्वलाञ् कर्तुम् बद्धपरिकराः कर्माऽकार्षुर् न तथा राजनीतिक–क्रियाकलापपरायणास् सोमनाथशिष्या इति तदीया **"स्वर् याता गिरिजाऽऽत्मजः प्रथमतश् शान्तिस् सुता निर्धवा, दोलाख्या ललिताऽप्यपत्यरहिताऽशीतेरुपान्ते वयः । अन्तेवासिपरम्परास्वभिरुचिं सस्नेहमातन्वती, विद्द्यासन्ततितन्तुदीपकविभाम् पुष्णात्वसौ कौमुदी"**[1] इत्याऽऽशंसाऽपि वितथीभूतेव दृश्यते । नैपालीय–भाषाव्याकरणविषयेऽप्येतेन यास्क-पाणिनिकात्यायन-पतञ्जलि-वररुचि-भर्तृहरिप्रभृतिभिस् सम्यक् परिष्कृत्योपस्थापितं शाश्वतवँ व्याकरणसिद्धान्तम् परित्यज्य पाश्चात्यगतानुगतिकताऽवलम्बिता दृश्यते[2] । संस्कृतभाषा–नैपालीयभाषावर्णमालाज्ञानेऽपि एतेन स्थूलास् त्रुटयः कृता दृश्यन्ते[3]। एवञ्च राज्ञा महेन्द्रेण स्वमनीषया सोमनाथाय दत्तः 'पण्डितराजः' इत्युपाधिः सोमनाथे सार्थकीभूतो न वेति वैदिकैरार्यैर् विवेचकैः परिचिन्तनीयम् प्रतीयते ।

## ११०. फत्यजङ्गपराक्रमसाहः (१९५०–२०३४ वै.)

नैपाल–काष्ठमण्डपनगरान्तर्गतज्ञानेश्वरटोल्लकनिवासी समेरजङ्गपराक्रमपौत्रः केसरिजङ्गपराक्रमपुत्रो मथुराकुमारीकुक्षिजो भोगेन्द्रराजादिशिष्यः फत्यजङ्गपराक्रमसाहः खलु श्रीदक्षिणकालिकाविभूतियोगस्तोत्रं रचयामास किल । तच्च स्तोत्रं २०२३तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते ।

---

१. प्रतिसंस्कृताया सिद्धान्तकौमुद्या आदौ "किञ्चिदावेदनम्" इत्यत्र द्रष्टव्यम् ।

२. एतद्विषयकवँ विस्तृतम् प्रतिपादनम् 'जिम्दो नेपालिभासा (पैलो खण्ड) [२०३०]' इति नैपालीयभाषाग्रन्थे ३७–६५ पृष्ठेषु दृश्यम् ।

३. एतस्य विषयस्य स्पष्टीकरणम् "नेपालि वर्णोच्चारणशिक्षा" इति नैपालीयभाषाग्रन्थस्य साजाप्रकाशनेन प्रकाशितस्य (२०३१ वै.) पञ्चमाऽष्टमनवमेषु परिशिष्टेषु द्रष्टव्यम् ।

## १११. दैवरातः (?–?)

अविज्ज्ञायमानकुलाभिजनादिविशेषो गजाननपुत्रो रमणमहर्षिशिष्यो नैपाल–काष्ठमण्डपोपत्यकान्तर्गतगोकर्णस्थ–गोरक्षा-ब्रह्मचर्याश्रमकुलपतिर् दैवरातः खलु पशुपतिहृदयन् नाम पशुपतिनाथस्वरूपादिविचारात्मकङ् ग्रन्थं रचयामास। स च ग्रन्थो नैपालीयभाषाप्रकाशिन्या समित्या प्रकाशितो मुद्रित उपलभ्यते। एष दैवरातो २००५तमे वैक्रमेऽब्दे स्थापितस्य पञ्चविंशतिसदस्यकस्य नैपालविश्वविद्यालयायोगस्य च पञ्चविंशस् सदस्योऽवगम्यते।

## ११२. नित्यानन्दस् सिग्देलः (१९५१-२०२३)

नैपाल-काष्ठमण्डपनगरान्तर्गतकालिमाटिकलङ्किस्थानटोल्लकनिवासी बुद्धिसागरपुत्रो रमाकुक्षिजो नित्यानन्दस् सिग्देलो नेपालदेशादिवर्णनात्मकं हिमालदर्पणं रचयामास। स च ग्रन्थः २०१४तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते। भाषादृष्ट्या तत्राऽनेके दोषा दृश्यन्ते। तेन पुष्पाञ्जलिरिति राजस्तुतिपरोऽन्योऽपि ग्रन्थो रचितो मुद्रितश्चोपलभ्यते।

## ११३. धनसम्सेरजङ्गो राणाः (१९५२–२०३९)

नैपाल–काष्ठमण्डपनगरान्तर्गतनक्षालटोल्लकनिवासी वीरसम्सेर-जङ्गपौत्रो रुद्रसम्सेरजङ्गज्येष्ठपुत्रो विष्णुकुमारीकुक्षिजो भोगेन्द्रराज–कोशनाथ–दुर्गानाथादिशिष्यो धनसम्सेरजङ्गो राणाश् श्रीपराविभूतिस्तोत्रम् [१९८६], योगानन्दलहरीम् [१९८६],श्रीस्तोत्रमञ्जरीम्, परामहिमस्तोत्रम् [२००२]; पराङ्गस्तवराजञ् च [२००२] रचयामास। शाक्ततन्त्रसम्बद्धा एते सर्वे ग्रन्थाः प्रकाशिता अवगम्यन्ते।

## ११४. शिवप्रसादस् सिग्देलः (१९५३–२०१६)

नैपाल–काष्ठमण्डपनगरोपकण्ठस्थदह्चोकग्रामनिवासी लक्ष्मीकान्त-पौत्रो बुद्धिप्रसादपुत्रो नन्दकुमारीकुक्षिजश् शिवप्रसादस् सिग्देलः खलु श्रीपतेर् भक्त्या षट्प्रकरणकं विशालाभजनन् नाम काव्यं रचयामास। तच् च १९९९तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते।

## ११५. पद्मप्रसादो भट्टराइः (१९५३–२०३० वै.)

नैपाल–रामेछापमण्डलान्तर्गतसालुसामलिग्रामाभिजनः काष्ठमण्डप-

नगरान्तर्गतगैरिधारटोल्लकनिवासी दीनानाथपुत्त्रः कृष्णमायाकुक्षिजो राजगुरुखगेन्द्रराजानुगृहीतः किल पद्मप्रसादो भट्टराइः २०१७तमे वैक्रमेऽब्दे नेपालाधिपतेरभिनन्दनम् चकार किल । तत्र च **"अद्य च निर्वाचनमदविकारदूषितमन्त्रिवर्गेऽस्मिन् । अस्त्रम् प्रयुज्य वैधं राष्ट्रियता रक्षिता बाढम्"** इति पद्यमपि दृश्यते । एतच् चाऽभिनन्दनम् २०४१तमे वैक्रमेऽब्दे प्रकाशिते पद्मस्मृतिग्रन्थे पद्मकृतित्त्वप्रकाशप्रकरणे १०५–१०६ इत्यङ्कितयोः पृष्ठयोर् मुद्रितमस्ति । अन्येऽपि तस्य लेखास्तत्र सङ्कलिता दृश्यन्ते ।

## ११६. जयराजशर्मा [पांडेः] (१९५३–२०३३ वै.)

नैपाल–काष्ठमण्डपनगराभिजनो भारतीयमहाराष्ट्रप्रान्तस्थबम्बैनगरनिवासी विजयराजप्रनप्ता द्विजराजनप्ता कुवलयराजपुत्त्रो जयराजशर्मा खलु धर्मविचारसारम् प्रतिपादयितुन् धर्मशतकम्, अर्थविचारसारम् प्रतिपादयितुम् अर्थशतकम्, मोक्षविचारसारम् प्रतिपादयितुं विवेकशतकञ् च रचयामास । तत्र विवेकशतकम् २००८तमे वैक्रमेऽब्दे, अर्थशतकम् २०१३तमाद् वैक्रमाब्दात् पूर्वमेव, धर्मशतकञ् च २०१३तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते ।

## ११७. दामोदरशर्मा झाः (?–?)

नैपाल–सप्तरिमण्डलान्तर्गतसकरपुराग्रामनिवासी दामोदरशर्मा झाः खलु २००३तमे वैक्रमेऽब्दे बालबोधरामायणं रचयामास किल ।

## ११८. शिवशङ्करो झाः (१९५४–२०३९ वै.)

भारतीयविहारप्रदेशान्तर्गतदरभङ्गामण्डलस्थ–साहपुरग्रामे कुलीलिकुले जातो रूपनाथप्रपौत्त्रो जलपादत्तपौत्त्रो वेदानन्दपुत्त्रो बेचनीकुक्षिजस्स्तीयज्येष्ठपितृव्यविद्यानाथप्रसादलब्धविद्यो नैपाल–सम्प्रशासननियोगं स्वीकृत्याध्यापनकार्यप्रसङ्गेन नैपाल–जनकपुर–मटिहानिप्रभृतिषु स्थानेषु निवसन् शिवशङ्करो झाः वेदपरिचय–नामकं लघुं गद्यग्रन्थं रचयामास । स च विद्यापरिचयनामकस्य ग्रन्थस्य वेदपरिचयात्मकः प्रथमो भाग इत्यवगम्यते । ग्रन्थकर्तुः पुत्त्रेण वैद्यनाथझामहाभागेन २०१४तमे वैक्रमेऽब्दे प्रकाशितोऽयं ग्रन्थो मुद्रित उपलभ्यते ।

## ११९. पुष्पराजो राजभण्डारी (१९५५–२०४५ वै.)

नैपाल–काष्ठमण्डपनगरान्तर्गतबटुगुच्चाटोल्लकनिवासी कीर्तिराजपुत्त्रः पुष्पराजो राजभण्डारी धर्मविषयाणाम् अध्यात्मविचारविषयाणाञ् चाऽऽपंवचनानाम् भगवच्चन्द्रिकाख्यं सङ्ग्रहम् चकार । स च सङ्ग्रहो निरनुवादो नैपालीभाषानुवादसहित प्राकृतभाषानुवादसहितश्चेति त्रिधा बहुवारम् मुद्रितः प्रकाशित उपलभ्यते ।

## १२०. रामनाथ आचार्यः (१९५५–२०३५ वै.)

नैपाल–गोरक्षमण्डलाभिजनः काष्ठमण्डपनगरान्तर्गतबानेश्वरटोल्लकनिवासी गिरिधारिपौत्त्रः कृष्णपुत्त्रः पिङ्गलाकुक्षिजो रामनाथ आचार्यो विविधानां समयेसमये रचितानां संस्कृतपद्यानाम् पद्यमालिकाख्यं सङ्ग्रहं चकार । स च सङ्ग्रहो मुद्रित उपलभ्यते ।

## १२१. उमानाथ आचार्यः (१९५७–२०१७ वै.)

नैपाल–त्रितुङ्गाचलमण्डलान्तर्गतमुँदिताम्रकूटग्रामाभिजनः काष्ठमण्डपनगरान्तर्गतचण्डोलग्रामनिवासी सूर्योपाध्यायाच् चतुर्दशश् श्रीकृष्णाचार्यात् पञ्चमो देवदत्तपौत्त्रो लोकनाथपुत्त्रो दुर्गादत्तखँदालदौहित्त्रो यशोदाकुक्षिजो विश्वनाथाचार्य–टेकनाथपौड्याल–काशिनिवासिप्राणाचार्यधर्मदासगजनाथसेनादि-शिष्यः प्राणाचार्य उमानाथ आचार्यो वार्ता-त्रयी-दण्डनीत्यान्वीक्षिकी–संहिता–सारसङ्ग्रहात्मक–शास्त्रकाव्यरूपां संहितासारवाङ्मयीमरचत् । तत्त्र सत्ययवनकाण्डम्, त्रेताकाण्डम्, द्वापरकाण्डम्, कलिकाण्डञ् चेति चत्वारि काण्डानि तत्त्र भवता प्रकल्पितानि । तत्त्र सत्ययवनकाण्डन् तत्त्रभवता सम्पूर्णम् परिशोधितन् निष्पादितम् । अन्येषाङ काण्डानान् तु तत्त्रभवता प्राथमिकरचनारूपेण पद्यानि कृतानि, किन्तु तानि परिशोधनीयानि व्यवस्थापनीयानि चासन् । एतादृश्यामेवाऽवस्थायान् तत्त्रभवान् २०१७तमे वैक्रमेऽब्दे आषाढमासे शरीरमुत्ससर्ज । तत्त्रभवतः कृतेरुपलब्धोंऽशः पुत्त्रस्य नरहरेराचार्यस्य पार्श्वे वर्तते । सत्ययवनकाण्डस्य पूर्वस् सर्गस् तु त्रिभुवनविश्वविद्यालयान्तर्गतसंस्कृताध्ययनसंस्थानस्य पत्त्रिकायां हैमवत्याम् प्रथमे वर्षे प्रथमेऽङ्के मुद्रितः प्रकाशितोऽस्ति । किन्तु तत्त्र कस्यचन सम्पादकस्य विरोधाद् "यः कर्तितुम् परकरग्रहपाशबन्धम्, मातुः कुशाग्रधिषणो व्यदधात् प्रबन्धम् । सिद्धा यतस् तदनुगा अपि



**उमानाथ आचार्यः**

(१९५७ - २०१७ वै.)

सत्यनिष्ठः कोऽस्मात् परोऽत्र सुकृती तिलकान् महिष्ठः ॥१६॥ विद्यासु हन्त हि परास्स्वपि लब्धपारश् चाऽज्ञानवार्धिपतितोद्धृति-कर्णधारः। विद्यालयर्यं य उदजीघटदग्र्यगण्यन् तम् मालवीय-विबुधरु गणयामि धन्यम् ॥१७॥ इत्येतादृशानि कति चन पद्यानि अत्रसमाविष्टानि सन्ति ।

## १२२. कुसुमाकर उपाद्ध्यायो रेग्मिः (१९५८–२०३२ वै.)

नैपाल-धादिङमण्डलान्तर्गत-सल्ल्यान-लकुआग्रामनिवासी केसरपौत्रो महेश्वरपुत्रो रेणुकाकुक्षिजथ् टेकनाथपौडेलशिष्यस् सण्टरबुडाथुम-पाठशालाद्ध्यापकः कौशिकगोत्रः कुसुमाकर उपाद्ध्यायो रेग्मिर् भक्तिसङ्ग्रहाख्यङ्ग्रन्थं रचयामास। संस्कृतपद्यात्मको नैपालीयभाषानुवादसहितस् स ग्रन्थः २०१२तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते । तेन रचितौ शक्तिभूषण-वर्णदर्पणतरङ्गावल्याख्यावन्यावपि द्वौ ग्रन्थावमुद्रितौ तत्पुत्रगृहे स्थितौ श्रूयेते ।

## १२३. गणेशप्रसादः [गायत्रीगणेशः] अर्ज्यालः (१९५८–२०२४ वै.)

नैपाल–गोर्खामण्डलान्तर्गतबक्राङपुराणग्रामनिवासी मोदनाथपौत्रो वेदशर्मपुत्रो गणेशप्रसादो (गायत्रीगणेशो)ऽर्ज्यालो रामभक्तमालाम्, गोरखा-मनःकामनास्तोत्रम्, कृष्णगण्डकीस्तोत्रम्, गोरक्षकालिकास्तोत्रम्, कालिकापञ्चदशीत्यादिकान् ग्रन्थांश् च प्रणिनाय किल। तत्र रामभक्तमाला २०१५तमे वैक्रमेऽब्दे मुद्रिता प्रकाशिता च वर्तते ।

## १२४. माधवप्रसादो देवकोटाः (१९६०–२०३८ वै.)

नैपाल-गोरक्षाचलमण्डलान्तर्गतलिग्लिगबोहोराग्रामाभिजनः पाल्पा-तान्सेननगरनिवासी पुष्करनाथपुत्रो माधवप्रसादो देवकोटा गणेशगौरव-पुरस्सरम् भारतीवैभवं स्तवकाव्यम् (२०१०), लघुकाव्यसङ्ग्रहरूपाम् ऊर्मिमालाम् (२०३८), जीवनदानन् नाम लघुकाव्यञ् (२०३८) च यथा-समयं रचयामास किल। एते सर्वे ग्रन्था मुद्रिताः प्रकाशिता उपलभ्यन्ते। एतेषु काव्येषु काव्यसौष्ठवं सर्वत्राऽनुगतन् दृश्यते ।

## १२५. अग्निप्रसादः खरेलः (१९६१ वै.–?)

नैपाल–धनकुटामण्डलान्तर्गत-याङरुपोपमण्डलस्थे ओयामग्रामे निवसन्

ब्रह्ममलालपुत्रो रामचन्द्रानुजोऽग्निप्रसादः खरेलः खलु अनुजयोश् श्रीप्रसाद-भवानीप्रसादयोश्च सहयोगेन ग्रहराशिदर्पणसारिणीं रचयामास किल। सा च १९९१तमे वैक्रमेऽब्दे मुद्रितोपलभ्यते। तत्र सङ्क्रान्तिदर्पणः, ग्रहोदयास्तादिविचारः, अन्तर्दशा, जन्मपत्रनिर्माणविधिः, भावफलादिविचारश्चेत्यादयो विषयास् सन्ति। तत्र "देशान्तरेषु चलितञ्च किल मानितानाम् प्रत्यन्तरञ्च विमलमन्तरसयं युतञ्च च। सूक्ष्मान्तरेण सहितं सकलन् दशानाञ्च कुर्मो वयञ्च विबुधमानसरञ्जनाय" इति प्रतिज्ञावाक्यन् दृश्यते।

## १२६. उमानाथः पन्थिः (१९६१–२००३ वै.)

नैपाल–गुल्मिमण्डलान्तर्गत–घुर्कोटग्रामनिवासी ढुण्ढिराजपुत्र उमानाथः पन्थिः कुलचन्द्रगोतामकृतगङ्गागौरवस्तवानुकारि गण्डकीगौरवं नाम लघु स्तवकाव्यं हृषीकेशस्तोत्रम् च रचयामास किल। तत् च लघुस्तवकाव्यद्वयन् तत्पत्न्या हरिकलया २००७तमे वैक्रमेऽब्दे मुद्रापयित्वा प्रकाशितमुपलभ्यते।

## १२७. छविलालः पोखरेलः (१९६२ वै.-)

नैपाल–धनकुटामण्डलान्तर्गतकचिडेग्रामाभिजनस् सुनसरिमण्डलान्तर्गत-धराननगरनिवासी रामनाथपौत्रो वेदनिधिपुत्रश् छविलालः पोखरेलो मुक्ताचयनन् नाम संस्कृतसूक्तिसङ्ग्रहम्, लघुकौमुदीसरलीकृतिरूपञ्च कौमुदीसारञ् च रचयामास। तौ द्वावेव ग्रन्थौ उपयोगिनौ दृश्येते। तौ मुद्रितौ च प्राप्येते।

## १२८. बद्रिनाथस् सुबेदी (१९६२–२०३१ वै.)

नैपाल–कास्किमण्डलान्तर्गत-स्याक्लुङग्रामाभिजनो लम्जुङमण्डलान्तर्गत–पाम्चोक–ग्रामे जातः खुदिबेनिनिवासी माधवपौत्रः कमलापतितृतीय–पुत्रो धर्मगर्भजः पुष्करावतीरयालचौरस्थपण्डित–दीननाथस्य काण्ठमण्डपनिवासिपण्डितदधिरामपौड्यालस्य च शिष्यो बद्रिनाथस् सुबेदी रुद्राद्ध्यायसारः, महेन्द्रोदयम्, संस्कृतसंस्कृतिरक्षणम्, आचारनिर्देशः, महेन्द्रोदयसंस्कृतविद्यालयस्येतिवृत्तम् इति ग्रन्थांश्चकार किल। तेषु रुद्राद्ध्यायसारः २०२२तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते। तत्र ग्रन्थकारस्य "क्व वा शम्भोश्चर्चा क्व च निगमवाक्यं सुमहितञ्च क्व चाऽहं संसारे विषयविषलोलोऽल्पमतिकः। तथाप्युत्साहस् स्यान् मम

बुधजनांस् तत्परायितुवं विलीनोऽयम् पन्था: कथमिति विषादावत-मनस:" इति भणितिरपि हृदयग्राहिणी दृश्यते ।

## १२९. नरनाथ आचार्यः (१९६२–२०४५ वै.)

Kur

नैपाल–त्रिशुङ्गाचलमण्डलान्तर्गत–चुँदिताम्रकूटग्रामनिवासी सूर्योपाध्यायात् चतुर्दशश् श्रीकृष्णाचार्यात् पञ्चमो देवदत्तपौत्रो लोकनाथपुत्रो दुर्गादत्तखँदालदौहित्रो यशोदाकुक्षिजो विश्वनाथाचार्योमानाथाचार्यादि-शिष्यो नरनाथ आचार्य: प्रतिसंस्कृतचतुराशीतिपूजापद्धति रचयामास । सा च पद्धतिस् तद्धस्तलिखिता प्रकाशनोन्मुखी तत्पुत्रगृहे सुरक्षिता वर्तते । तत्रभवता समयेसमये रचितानि संस्कृतपद्यानि नैपालीयभाषापद्यैस् सह सङ्गृहीतानि "पद्यमाला" इतिनाम्ना २०४०तमे वैक्रमेऽब्दे मुद्रितान्युपलभ्यन्ते ।

## १३०. जीवनाथो झा:(१९६३ ?– २०३८ ? वै.)

भारतीयविहारप्रान्तान्तर्गतदरभङ्गामण्डलान्त:पाति–सरिसबग्रामस्थ-पाहिटोल्लकाभिजनो नैपालसम्प्रशासननियोगं स्वीकृत्य जनकपुर-संस्कृत-प्रधानपाठशालाद्ध्यापकत्वमाचरन् जनकपुरे निवसन् नेपालदेशं स्वकार्यक्षेत्रञ्च कुर्वाणो दीनबन्धुझापुत्रो जीवनाथो झा: खलु महेन्द्रप्रतापोदयन् नाम लघु काव्यञ्च चकार । तच् च काव्यम् मुद्रितमुपलभ्यते । अस्य वीरेन्द्राभि-नन्दनमिति पद्याष्टकमपि हैमवत्या: पत्रिकाया: प्रथमेऽङ्के प्रकाशितन् दृश्यते । अन्येऽपि तस्य बहवो लघवस् संस्कृतग्रन्थास् सन्तीति श्रूयते ।

## १३१. रविनाथष् ठक्कुर: (?–?)

भारतीयविहारप्रान्तस्थदरभङ्गामण्डलान्तर्गतलरवनीग्रामाभिजनश् श्रोत्रियवंशजो बबुआशर्मपुत्रो मुक्तिनाथशर्म–बालकृष्णमिश्रादिशिष्यो रविनाथष् ठक्कुरो नैपालसम्प्रशासननियोगमङ्गीकृत्य मटिहानिसंस्कृतप्रधान-पाठशालायान् न्यायव्याकरणाद्ध्यापनकार्यमाचरन् मटिहानिग्रामे निवसन् न्यायरत्नावलीं रचयामास किल। तेन स्वपितृपितामहादिजीवनवृत्तान्तवर्णनपर-मेकं पद्यकाव्यमपि रचितमस्तीति तच्छिष्यो गोविन्दचौधरिमहाशयो वदति । एतौ द्वौ ग्रन्थौ मुद्रितावपि स्त इति स एव ब्रवीति । अन्येऽपि तदीया: प्रौढ-पाण्डित्यपूर्णा ग्रन्था अभूवन्, ते तु कस्य हस्ते पतिता इति नज्ञायते इति च स एव प्रतिपादयति ।

## १३२. शेषराजो रेग्मि: (१९६४–२०४४ वै.)

नेपाल-काष्ठमण्डपनगरान्तर्गत-नक्शालटोल्लकनिवासी देवचन्द्रपुत्त्रो-हेमकुमारीगर्भज उमानाथशर्मालशिष्यत्त्वेन कैश्चिदुच्यमानश् शेषराजो रेग्मि: भट्टिकाव्यटीकाम्, उत्तररामचरितटीकाम्, मालतीमाधवटीकाम्, मेघदूतटीकाम्, प्रसन्नराघवटीकाम्, स्वप्नवासवदत्तटीकाम्, साहित्यदर्पणटीकाञ् च प्रायेणाऽऽधुनिकपरीक्षाप्रणाल्युपयोगितया रचयाम्बभूव । रघुवंश–किराता-र्जुनीय–शिशुपालवध–नैषधीयचरित – दशकुमारचरित –कादम्बर्यादिग्रन्थानाम् परीक्षासु निर्धारितेषु भागेष्वपि तेन टीका रचितास् सन्ति । उपर्युक्तास् सर्वा एव टीका यथासमयम् मुद्रिता उपलभ्यन्ते ।

## १३३. चिरञ्जीवी पोख्रेल: (१९६४ वै.–)

नेपाल-काष्ठमण्डपमण्डलान्तर्गतकीर्तिपुरचोभारनिवासी नारायणपौत्त्रो यदुनाथपुत्त्रश् चिरञ्जीवी पोख्रेल: आदिनाथाष्टकन् नाम स्तवकाव्यं रचयामास । तच् च २०१५तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते ।

## १३४. जुननाथ: पण्डित: (१९६५–२०४७ वै.)

नेपाल–त्रिशूलगाचलमण्डलान्तर्गत-सुरपुरीसमीपस्थोपरिष्टचुं दिहिम्पानि-ग्रामाभिजन: काष्ठमण्डपनगरान्तर्गतलाजिम्पाटटोल्लकनिवासी महाराज-गुरुपदमध्यारूढो देवदत्ताचार्यदौहित्त्रश् श्रीधरपण्डितपौत्त्रश् शतञ्जीवि-पण्डितसूनु: खिनादेवीगर्भजो प्रयागदत्त–मोदनाथ–टेकनाथ–हरिनाथशुक्ल–रामचन्द्रखनाल–चिन्नस्वाम्यादिशिष्यो जुननाथ: पण्डितो निर्णयसिन्धु-सिद्धान्तसाराख्यम् प्रतिसंस्कृतनिर्णयसिन्धुरूपन् धर्मशास्त्रनिबन्धग्रन्थं रचया-मास । स च ग्रन्थ: प्रकाशनापेक्षी वर्तते ।

## १३५. मीनप्रसादो नेपाल: (१९६७–२०३५ वै.)

नेपाल-पाल्पामण्डलान्तर्गत–खसेउलि–देउरालि-निवासी भीमलालशर्मण: पुत्त्रो मीनप्रसादो नेपाल: "ईश्वरास्तित्त्वसिद्धौ मानानि" इत्याख्यन् तार्किकग्रन्थम् जग्रन्थ किल । कैश्चिद् विवेकशिथिलैर् वेदान्तग्रन्थत्त्वेन जेगीय-मानोऽन्यै: पुनस् सप्तमास्तिकदर्शनत्त्वेन स्तूयमानस् स ग्रन्थो "मीनोक्त-मीश्वरदर्शनम्" इति शीर्षकन् दत्त्वा नेपाल-सम्प्रशासन–सञ्चार–मन्त्रालय-सूचनाविभागेन २०४१ तमे वैक्रमेऽब्दे मुद्रापयित्वा प्रकाशित उपलभ्यते । तत्त्व मीनोपात्ता: के चन तर्का बाललालनमात्त्रफला अपि दृश्यन्ते ।

## १३६. लोकनाथो ढकालः (१९६७ वै.–)

नेपाल–सँखुवासभामण्डलान्तर्गत–चइनपुरस्थे ओयाकग्रामे जातः खैराङखर्त्तिग्रामापराभिधे वानेश्वरग्रामे पूर्वं स्थितः काठमण्डपनगरान्तर्गतबानेश्वरटोल्लकनिवासी श्रीहर्षापराभिधलोकनाथपौत्रो गङ्गाधरपुत्रो विष्णुमायाकुक्षिजो लोकनाथो ढकालः पञ्चोत्तरशतपद्यात्मकम् पद्मप्रसादभट्टराइजीवनरचितं श्रद्धाञ्जल्याख्यं रचयामास । तच् च २०२१तमे वैक्रमेऽब्दे त्रिभुवनविश्वविद्यालय–संस्कृताध्ययनसंस्थानेन प्रकाशिते श्रद्धाञ्जल्याख्ये ग्रन्थे सङ्गृहीतम् दृश्यते ।

## १३७. सोमनाथो घिमिरेः (१९६८ वै.–)

नेपाल–रामेछापमण्डलान्तर्गताऽर्चलेग्रामाभिजनः काठमण्डपनगरान्तर्गतटङ्गालटोल्लकनिवासी पशुपतिनाथनप्ता श्रीकमलाकान्तपुत्रः कमलागर्भजस् सोमनाथशर्मा घिमिरेस् स्वपितुःश्रीकमलाकान्तस्य जीवनचरितम्, शालग्राममीमांसाम्, संस्कृतमयनेपालदेश इति लघुग्रन्थम्, श्रीविष्णोःपौराणिकपूजापद्धतिञ् च रचयामास । एते सर्वे ग्रन्था मुद्रिताः प्राप्यन्ते । तत्र शालिग्रामपरीक्षेति हस्तलिखितो ग्रन्थस् त्रिविक्रमकृतो नेपालराष्ट्रियाभिलेखालये षष्ठ्याम् पञ्जिकायाम् २०६ सङ्ख्यायाम् उल्लिखितो दृश्यते, नेपालनिलयपण्डितपुङ्गवत्रिपुरानाथसङ्गृहीता शालग्रामपरीक्षा मुद्रिताऽप्युपलभ्यते । तस्यां रमानाथशर्मणा भूमिका योजिता दृश्यते । प्रस्तुतायाश् शालग्राममीमांसायास् ततो वैशिष्ट्यं सुधीभिरन्वेष्टव्यम् ।

## १३८. हेमन्तरामो भट्टराइः (१९६८ वै.–)

नेपाल-ललितपुरमण्डलान्तर्गतलुँबुग्रामाभिजनः काठमण्डपनगरान्तर्गत कमलादिटोल्लकनिवासी लक्ष्मीनाथनप्ता कालिदासपुत्रः कोमललक्ष्मीगर्भजो हेमन्तरामो भट्टराइः खलु उग्रतारास्तवम्, आदर्शत्रिभुवनचम्पूम्, आदर्शमहेन्द्रचम्पूम्, आदर्शजवाहरलालचम्पूम्, गान्धिगीताञ् च रचयामास । एते सर्वे ग्रन्था मुद्रिता उपलभ्यन्ते ।

## १३९. बुद्धिसागरः पराजुलिः (१९७० वै.–)

नेपाल–कास्किमण्डलान्तर्गतपोखरावलपुर–मिरुवा–टोल्लकाभिजनः काठमण्डपनगरान्तर्गतबालुवाटारटोल्लकनिवासी भूरमणनप्ता शिवप्रसादसुतः पार्वतीगर्भजो बुद्धिसागरः पराजुलिस् साम्राज्यलहरीं स्तवकाव्यम्,

राज्याभिषेकविधानकारिकाम्, ब्रह्मशान्तिम्, आह्निकाचारविषयं श्रीसपर्यामृतम्, भगवद्वरिवस्याञ् च रचयित्वा मुद्रापयित्वा च प्रचारयामास। एतेषु ग्रन्थेषु तत्रभवतो वैदुष्यङ् कवित्वञ् च यथास्थानङ् किञ्चिदभिव्यक्तमिति वक्तुं शक्यम्। तत्रभवता धर्ममीमांसाशास्त्रे न्यायतरङ्गिणी तर्कपरिशेषश्चेति द्वौ ग्रन्थौ, ब्रह्ममीमांसाशास्त्रे स्वरूपविलास इति ग्रन्थः, भारतवर्षोन्नतये मार्गस्य प्रदर्शकस् समन्वयचम्पूरिति ग्रन्थश्चेति चत्वारोऽन्ये ग्रन्थाश् च विरचितास् सन्तीति तत्रभवान् कथयति।

## १४०. यदुनाथः खनालः (१९७० वै.–)

नेपाल–त्रिशूलगाचलमण्डलान्तर्गत–मानुङ्ग्रामाभिजनः काष्ठमण्डपनगरान्तर्गत-बानेश्वरटोलकनिवासी देवदत्ताचार्यदौहित्रो रामप्रसादनप्ता नरनाथपुत्रस् तारागर्भजो यदुनाथः खनालस् समयेसमये विविधानि संस्कृतपद्यानि रचयामास किल। तेषु तत्रभवता स्वतन्त्रतया रचितानि पद्यानि पाश्चात्यकविकृत्यनुवादरूपाणि पद्यानि च सन्ति। तेषु पद्येषु सामयिको विविधो भावोद्रेकः पाठकैरास्वादयितुं शक्यते। तेषाम् पद्यानां सङ्ग्रहौ द्वौ लघुकाय–महाकायौ यथासमयम् मुद्रितावुपलभ्येते।

## १४१. नयराजः पन्तः (१९७० वै.–)

काष्ठमण्डपनगरान्तर्गत-चटुसवलबहालनिवासी कृष्णदत्तपुत्रो यज्ञप्रियागर्भजो भुवननाथपाँडेदौहित्रो नयराजः पन्तः "पृथ्वीनारायणोपदेशस्य संस्कृतपद्यमयी व्याख्या (श्री ५ पृथ्वीनारायणशाहको उपदेशको संस्कृत तथा नेपाली पद्यमयी व्याख्या)" इतिग्रन्थं रचयामास। तत्र संस्कृतपद्यैरपि सम्पूर्णस्य पृथ्वीनारायणोपदेशस्य प्रतिपादनङ् कृतन् दृश्यते। एष ग्रन्थो मुद्रितः प्राप्यते।

## १४२. गुणराजः खनालः (१९७२–२०३१ वै.)

नेपाल-गोरखाचलमण्डलाभिजनः काष्ठमण्डपनगरान्तर्गतत्रिपुरेश्वरटोलकनिवासी दुर्गानाथप्रपौत्र उमानाथपौत्रो हर्षनाथपुत्रो गुणराज उपाध्यायः खनालो रुक्मिणीपरिणयन् नाम द्विसर्गङ् कालिदासादिमहाकविकृत्यनुकारि लघु काव्यं रचयामास। तच् च २०३१तमे वैक्रमेऽब्दे प्रथमम् मुद्रितम् २०४४तमे वैक्रमेऽब्दे पुनर्मुद्रितन् नेपालीयभाषानुवादसहितमुपलभ्यते। गुणराजरचितं हिट्लरचरितन् तु नामशेषताङ् गतमिति वदन्ति।

## १४३. हरिनाथ उपाद्ध्यायो ढुङ्गेलः (१९७३–२०३१ वै.)

नैपाल-भक्तपुरमण्डलस्य-कटुञ्जेग्रामाभिजनः काष्ठमण्डपनगरनिवासी पद्मनाभपुत्रो हरिनाथ उपाद्ध्यायो ढुङ्गेलः पद्यात्मकं सोमनाथशर्मजीवन-चरितोत्तरार्धं रचयामास । तच्च २०२९तमे वैक्रमेऽब्दे मुद्रितमुप-लभ्यते । सोमनाथशर्मजीवनचरितस्य पूर्वार्धन्तु बद्रिनाथेन अधिकारिणा (१९६१-२०१६वै.) काष्ठमण्डपनगरान्तर्गतनरदेवीटोल्लकनिवासिना रचितम् प्रकाशितमस्ति । हरिरचितन् 'निजजन्मभूमिः' इति, 'हृदि वज्रपात' इति च लघु काव्यद्वयं 'सुरभिः' इत्याख्ये सङ्ग्रहे २०२६तमे वैक्रमेऽब्दे प्रकाशितमुप-लभ्यते । हरिरचितः पद्यमयस् 'सरदारच्छविलालसूरिपरिचयः' कुशलबोदय-नाटके सलंलग्नः प्रकाशित उपलभ्यते । हरिणैव रचितः 'पृथ्वीनारायणस्य खड्गसिद्धिः' इति पद्यलेखो नेपालसंस्कृतसङ्ग्रहे दृश्यते ।

## १४४. कृष्णप्रसादशर्मा लम्सालः (१९७४–२०४५ वै.)

नैपाल–त्रिशुङ्गाचलमण्डलाभिजनः किल कृतपूर्वचाबेलटोल्लकनिवासः काष्ठमण्डपनगरान्तर्गतचण्डोलटोल्लकनिवासी धनञ्जयपौत्रो दीनोदयज्येष्ठ-पुत्रः पोटलिका–कुक्षिजः कृष्णप्रसादशर्मा लम्सालश् शाक्ततन्त्रानुसारिणम् पञ्चषष्टिश्लोकात्मकन् दक्षिणाविभूतिस्तवराजन् नवोत्तरशतश्लोकात्मकञ्च कौलतन्त्रयोगसाररूपयं योगाऽभ्यासतरङ्गन् च रचयामास । तौ द्वावेव ग्रन्थौ मुद्रितावुपलभ्येते ।

## १४५. कृष्णप्रसादो घिमिरेः (१९७६ वै.–)

नैपाल–काष्ठमण्डपनगरान्तर्गतगैरिधाराटोल्लकनिवासी केदारनाथ-शर्मपुत्रो मनोरथकुमारीगर्भजः कृष्णप्रसादशर्मा घिमिरेः श्रीकृष्णचरितामृतम् महाकाव्यम् (पूर्वार्धम्), कठोपनिषदाधृतन् नाचिकेतसङ्काव्यम्, रामविला-पञ्च खण्डकाव्यम्, नेपालेश्वरगौरवन् नाम रूपकम्, गौरीगिरीशमिति गीति-काव्यञ् च रचयामास किल । एते ग्रन्था मुद्रिता उपलभ्यन्ते । अन्येऽपि ययातिचरित-वृत्रवध–सम्पातिसन्देश-मनोयानादयो ग्रन्थास् तेन रचिता अवगम्यन्ते । तस्य कृतिषु अनुसन्धानमपि जातमस्ति ।

## १४६. सुरेशो झाः (१९७७ वै.–)

नैपाल–महोत्तरिमण्डलान्तर्गतसांडाग्रामनिवासी जयदेवझापुत्रो राधा-

कुक्षिजो व्रजमोहनशिष्यस् सुरेशो झा: भट्टोजिदीक्षितकृतिम् पाणिनीय-वैयाकरण-सिद्धान्तकौमुदीम् प्रतिसंस्कृत्य द्वादशसाहस्त्रीं श्लोकसिद्धान्तकौमुदीं रचयामास । स च ग्रन्थ: २०३८तमे वैक्रमेऽब्दे मुद्रित: प्रकाशितो दृश्यते । तेन ग्रन्थकारेण स्वग्रन्थस्य प्रथमभागस्य भूमिकायाम् तृतीये पृष्ठे "किञ्चिद्-वर्षपूर्वमहन्' लघुकौमुद्याश् छायामाश्रित्य बालसंस्कृतश्लोकव्याकरणं व्यरीरचम् प्राचीकशञ्चाऽपि" इति वाक्यम् प्रयुक्तमस्ति। एवमशुद्धपदप्रयोगस्य दर्शनात् सा श्लोकसिद्धान्तकौमुदी वैयाकरणैस् सावधानैरनुशीलनीया यथार्हम् परिष्करणीया च भाति । अनेन ग्रन्थकारेण रचिता सौरेशी लघुसिद्धान्तकौमुदी अपि प्रकाशनोन्मुखीति श्रूयते । संस्कृतशिक्षासोपानादयोऽन्येऽपि तदीया ग्रन्थाश् श्रूयन्ते ।

## १४७. भीमकान्त: पन्थि: (१९७८ वै.–)

नेपाल–गुल्मिमण्डलान्तर्गत-धुर्कोट-बाग्ला-बडाचौरनिवासी देवीप्रसाद-पुत्रो नन्दकुमारीकुक्षिजो भीमकान्त: पन्थिर् जगदम्बिकावैभवम्,जगदीश्वर-वैभवम् चेति भक्तिभावप्रधानञ्च काव्यद्वयम् चकार किल। तच्च काव्यद्वयम् प्रकाशनोन्मुखं श्रूयते।तेन रचितानाव् विविधानां संस्कृत-पद्यानां सङ्ग्रहोऽपि तत्पुत्रेण लक्ष्मीकान्तपन्थिना सङ्गृह्यमाणोऽवगम्यते । तदीयं शालग्राम-शिलाष्टकं हैमवत्या द्वितीयेऽङ्के मुद्रितम् दृश्यते च ।

## १४८. पूर्णप्रसादब्राह्मणो दुवाडि: (१९७८–२०४६ वै.)

नेपाल-गोरक्षाचलमण्डलान्तर्गतकाफलडाँडाग्रामाभिजन: काष्ठमण्डप-नगरस्थताहाचलटोलकनिवासी देवीदत्तपुत्रो गायत्रीकुक्षिज: पूर्णप्रसादो ब्राह्मणस् सत्यहरिश्चन्द्रम्, विश्वेदेवा:, रूपान्तरणात्मकस् तदर्थमेवेति गीतिकाव्यग्रन्थ:, ईशावास्यवृत्ति: (रूपान्तरणात्मिका), राजतन्त्रं सदा जीव्यात् इति च संस्कृतग्रन्थान् रचयामास । एते सर्वे ग्रन्था मुद्रिता दृश्यन्ते ।

## १४९. चूडानाथो भट्टराय: (१९७८ वै.–)

नेपाल–काष्ठमण्डपनगरान्तर्गतबालुआटारटोलकनिवासी लोकनाथपुत्र: कुलमञ्जरीकुक्षिजश् चूडानाथो भट्टराय आधुनिकवस्तुवम् आधुनिकतर्क-

प्रधानशैलीकम् परिणामनाटकं रचयामास। तच्च नाटकम् २०१६तमे वैक्रमेऽब्दे प्रकाशितमुपलभ्यते।

### १५०. भोलानाथः पौडेलः (१९७८ वै.–)

नैपाल–ललितपुरमण्डलान्तर्गतलुँबुसिस्नेरिग्रामाभिजनः काष्ठमण्डप-नगरान्तर्गतवानेश्वरटोल्लकनिवासी नन्दलालपौत्रो धर्मानन्दपुत्रो भोलानाथः पौडेलो 'बालगीतिका' इत्याख्यं संस्कृतभाषानिबद्धबालगीतसङ्ग्रहं रचयामास। स च सङ्ग्रहः २०२७तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते।

### १५१. मेघराज उपाद्ध्यायो नेउपानेः (१९७९?–२०४८ वै.)

नैपाल–दाङमण्डलान्तर्गतहापुरबिजौरिग्रामनिवासी गोवर्धनपुत्रो मेघराज उपाद्ध्यायो नेउपानेः बबईलहरीलं लघु नदीस्तुतिकाव्यं रचयामास। तच् च काव्यं 'संस्कृताद्ध्ययनसंस्थानम्' इत्याख्येन त्रिभुवनविश्वविद्यालयविभागेन २०३८तमे वैक्रमेऽब्दे दाङे मुद्रितमुपलभ्यते। अन्योऽपि कश् चन तदीयश् शोभनो ग्रन्थोऽमुद्रितोऽस्तीति च श्रूयते।

### १५२. गिरिधारी भट्टराइः (१९८०? वै.–)

नैपाल–त्रिशुलगाचलमण्डलान्तर्गत–बन्दिपुरग्रामान्तःपाति-बुङ्का-ग्रामटिकाभिजनो याम्पाग्रामनिवासी हरिभक्तपौत्रः काकुपुत्रो गिरिधारी भट्टराइः 'सवर्णयोः कुण्डगोलकयोर्ब्राह्मणत्वम्' इति दुर्बोधार्थकनामकवं विवादास्पदलं लघुन् निबन्धं रचयामास। स च निबन्धः २०४२तमे वैक्रमेऽब्दे मुद्रितो दृश्यते।

### १५३. शालग्रामशर्मापराभिधः शिवराजः पोख्न्यालः (?-?)

नैपाल–गुल्मिमण्डलान्तर्गतपणेनाग्रामाभिजनश् शालग्रामशर्मापराऽभिधश् शिवराजः पोख्न्यालः खलु पाणिनितपोभूमिरिति लघुङ् गद्यग्रन्थं रचयित्त्वा स्वग्रामम् पाणिनितपोभूमित्वेन प्रतिजज्ञे। स च ग्रन्थः २०१५तमे वैक्रमेऽब्दे मुद्रितो दृश्यते।

### १५४. गणेशप्रसादो गौतमः (१९८२–२०४२ वै.)

नैपाल–धादिङमण्डलान्तर्गतजीवनपुरग्रामाभिजनः काष्ठमण्डपनगरान्तर्गतगोशालाटोल्लकनिवासी चातुर्मास्ययाजि–चन्द्रशेखरपौत्रो दर्शपूर्णमासयाजि-टङ्कनाथपुत्रः पवित्राकुक्षिजो दर्शपूर्णमासयाजी गणेशप्रसादो गौतमो मनुष्यजीवनवं व्यावहारिकदृष्ट्या पारमार्थिकदृष्ट्या च वर्णयन् प्रपञ्चाप्रपञ्चप्रकाशङ् खण्डकाव्यं रचयामास। एतेन मातृसन्देश इति काव्यमपि

रचितमिति के चन वदन्ति। किन्तु तस्य कश् चनांऽशो पत्रिकायाम् प्रकाशित उपलभ्यते, सम्पूर्णं काव्यन् तु अविज्ञातमेवेति अन्ये वदन्ति ।

## १५५. भरतराजो घिमिरेः [मन्थलीयः] (१९८२ वै.-)

नेपाल–रामेछापमण्डलान्तर्गत–मन्थलिग्रामाभिजनः काष्ठमण्डप-नगरान्तर्गत–डिल्लिबजार-घट्टेकुलोटोल्लकनिवासी जीवनाथपौत्रो भवप्रसाद-पुत्रस् सोमकुमारीकुक्षिजश् शेषराजरेग्मिशिष्यो भरतराजो घिमिरेः महेन्द्रो-दयम् महाकाव्यं रचयामास । मन्थलिग्रामवास्तव्य–शङ्करप्रसाद–सत्याल-कृतटीकासहितन् तत् २०१७तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते । काव्यगुणास् तत्र सन्त्येव । किन्तु कविकुलशिक्षागुरो राजशेखरस्य "**जानीयाल् लोक-साम्मत्यङ् कविः कुत्र ममेति च । असम्मतम् परिहरेन् मतेऽभिनि-विशेत च**" इति शिक्षामपरिशील्य रचितन् तत् काव्यलं लोके प्रचारे कामपि कुण्ठामनुभवत् प्रतीयते । तदीयमन्यत् शैलबालेति खण्डकाव्यमपि मुद्रितमुपलभ्यते । मोतिरामवृत्तमिति खण्डकाव्यमपि भारद्वाजाख्यायाम् पत्रिकायाम् प्रकाशितमस्तीति, कृष्णाभिसर्पणन् नाम खण्डकाव्यमप्रका-शितमेवास्तीति, अन्येऽपि उपत्रिंशा मुक्तकश्लोकास् सन्तीति घिमिरेमहोदयेन स्वयमुक्तम् ।

## १५६. पशुपतिः झाः (१९८३ वै.?–)

नेपाल–महोत्तरिमण्डलान्तर्गत–सांडाग्रामाऽभिजनो दरिहरेवंशजो मनोहरपौत्रः कृष्णानन्दमध्यमपुत्रो विष्णुदेव–जीवनाथ–कार्त्तिकेयादिशिष्यः पशुपतिर् झाः २०३६तमे वैक्रमेऽब्दे नेपालसाम्राज्योदयन् नाम इतिहास-वर्णनप्रधानम् पञ्चदशसर्गात्मकङ् काव्यञ् चकार । तच्च २०३७तमे वैक्रमे-ऽब्दे मुद्रितमुपलभ्यते ।

## १५७. हरिशरण उपाध्यायो लम्सालः (१९८८ वै.–)

नेपाल–स्याङ्जामण्डलान्तर्गत–चित्रेभञ्ज्याङग्रामस्थकुलुङखोला-ग्रामटिकाभिजनो नवलपरासिमण्डलान्तर्गतगैंडाकोटग्रामनिवासी मणिरत्नपुत्रो भगवच्छरण–गणेशदत्तपाण्डेयाऽऽदिशिष्यो हरिशरण उपाध्यायो लम्सालश् शब्दब्रह्मशतकन् नाम व्याकरणदर्शनविषयकं शास्त्रकाव्यं रचयामास । तच्च काव्यम् २०३४तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते । तस्य सभ्यताप्रकाश इत्याख्योऽन्योऽपि लघुर् ग्रन्थो मुद्रितोऽस्तीति श्रूयते ।

## १५८. पुण्यप्रसादो रेग्मिः (१९९० वै.–)

नेपाल-पांचथरमण्डलान्तर्गत-फिदिमोपमण्डलान्तःपातिसुभाङग्रामाभिजनो

वाराणसीनिवासी जनकलालपुत्रो यशोदाकुक्षिजो योगीश्वराश्रमशिष्यो गायत्रीस्वरूपब्रह्मचारीति सम्प्रति व्यवह्रियमाणः पुण्यप्रसादो रेग्मिः खलु श्रीभगवत्समर्चाख्यां स्तुतिमञ्जरीं रचयामास किल । सा च २०३८तमे वैक्रमेऽब्दे पुनर्मुद्रितोपलभ्यते ।

## १५९. भेषराजशर्मा सापकोटाः (१९९१ वै.–)

नेपाल-गुल्मिमण्डलान्तर्गत-भटकुवाग्रामाभिजनः पाल्पामण्डलान्तर्गत-सुन्दरग्राम-(मदनपोखरा-)निवासी नरनारायणपौत्र ऋषिरामपुत्रो राधिका-कुक्षिजश् श्रीकृष्णमणित्रिपाठिशिष्यो भेषराजशर्मा सापकोटास् सूक्तिशतकन् नाम कोषकाव्यं रचयामास । तच् च पण्डित-श्रीकृष्णमणिशास्त्रिणा संशोधितं सम्पादितञ्च २०१५तमे वैक्रमेऽब्दे वाराणस्याम् मुद्रितमुप-लभ्यते । अनेनैव ग्रन्थकारेण रचितस् सापकोटासरस्वत्याख्यो गीतामञ्जरी-स्वार्थार्थवंशीर्षादिगर्भकोऽन्योऽपि ग्रन्थः प्रकाशोन्मुख इति श्रूयते ।

## १६०. मणिप्रसादस् तिवारिः (१९९२ वै.–)

नेपाल–स्याङ्जामण्डलान्तर्गत–गरौंकोटग्रामाऽभिजनः काष्ठमण्डप-नगरान्तर्गत–नक्शाल–नागपोखरिटोलक निवासी जीवनारायणपौत्रस् त्रिलो-चनपुत्रः कौसल्याकुक्षिजो बालाकृष्णाचार्य–शिष्यो मणिप्रसादस् तिवारिः खलु त्रिकालजन्मकुण्डलीदर्पणम् (२०२१। स्वयंदशाबोधादिकन् च रचया-मास । एते ग्रन्थाः प्रकाशिता अवगम्यन्ते ।

## १६१. हरिप्रसाद आचार्यः (१९९३ वै.–)

नेपाल–पिउठानमण्डलान्तर्गत–खैराग्रामाऽभिजनो दाङमण्डलान्तर्गत-मानपुरग्रामनिवासी दुर्गाप्रसादपुत्रो हीराकुक्षिजः आत्मारामादिशिष्यो हरिप्रसाद आचार्यः "गोरक्षशाहवंशः" इति नाम्नाऽङ्कितम् इतिहासप्रधानञ्च काव्यं रचयामास । तच्च काव्यं २०२२तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते । एतेन 'श्री ५ महेन्द्रविरहवेदना' इति, 'श्री ५ वीरेन्द्रराज्याभिषेकम्' इति च लघुनी काव्ये च रचिते मुद्रापिते चोपलभ्येते । अनुसन्धानप्रकाशे बुद्धि-विनोदप्रश्नोत्तरानुवादे चाऽस्य कर्तृता दृश्यते ।

## १६२. रोहिणीवल्लभशर्मा पोखरेलः (१९९५ वै.–)

नेपाल–सिराहामण्डलान्तर्गत–भवानीपुर–बाखराभिजनो धनुषा-मण्डला-न्तर्गत–जनकपुरान्तःपाति-किशोरीनगरनिवासी गणेशप्रसादोपाध्यायपौत्रो रघुनाथसुतो बलदेवझा–जीवनाथझादिशिष्यो रोहिणीवल्लभशर्मा पोखरेलः खलु अभिनवमेघदूतम् (प्रणयकाव्यम्), मिथिलासौरभम्, विनतिपुष्पाञ्जलिम्,

काव्यमीमांसायाः पञ्चमाद्ध्यायान्तायाः पद्यमयं रूपान्तरणञ्च रचयामास। एते ग्रन्था मुद्रिता अवगम्यन्ते। तेनाऽन्येऽपि वीरेन्द्रोपायनादयो ग्रन्थाः कृतास् सन्तीति श्रूयते।

## १६३. टीकारामः पन्थिः (१९९६ वै.–)

नेपाल–गुल्मिमण्डलान्तर्गताऽर्खलेग्रामस्थ-भाडग्राम-ग्रामटिकाभिजनष् टीकारामः पन्थी रुरुवृत्तम् (२०२१), अश्रुप्रहारः (२०३९), नेनेपालः (२०४०) इति ग्रन्थान् रचयामास। ते च ग्रन्था यथाकालम् मुद्रिता उपलभ्यन्ते।

## १६४. खेमराजः केशवशरणः (१९९६ वै.–)

भारतस्य असमप्रान्ते जातो नेपाल–काष्ठमण्डपनगरान्तर्गत–सिफले-टोल्लकनिवासी तारानिधिपुत्त्रो द्रौपदीकुक्षिजः खेमराजः केशवशरणः श्री५मन्महेन्द्रगौरवन् नाम द्वादशपद्यकलं लघु स्तुतिकाव्यञ् चकार किल। तच् च प्रकाशनवर्षाङ्कन-रहितम् मुद्रितन् दृश्यते।

## १६५. शिवराज आचार्यः कौण्डिन्न्यायनः (१९९७ वै.–)

नेपाल–त्रिशूलगाचलमण्डलान्तर्गत ताम्रकूटग्रामाभिजनः काष्ठमण्डप-नगरान्तर्गत–लाजिम्पाट-सरस्वतीमार्गटोल्लकनिवासी सूर्योपाद्ध्यायात् पञ्चदशश् श्रीकृष्णाचार्यात् षष्ठो शेखरापराभिधपद्मनाभसुत–देवदत्तप्रपौत्त्रो लोकनाथपौत्त्रो नरनाथपुत्त्रो गङ्गामायाकुक्षिजस् सुगृहीतनाम–नरनाथाचार्य-रुद्रशङ्करपौडेल–बुद्धिसागरपराजुल्ल्याऽऽदिशिष्यश् शिवराज आचार्यः कौण्डिन्न्यायनः काव्यप्रकाशस्य हैमवत्याख्यां विवृतिमररचत्। तस्या विवृतेर् वैशिष्ट्यञ् च तत्रभवतैवं वर्णितम्–"सोऽहङ् काव्यप्रकाशस्य व्याख्यानानि बहून्यपि। पठित्त्वा तत्त्र केषाञ्चिद् विद्वन्मात्त्राधि-गम्यताम्॥ केषाञ् चित् तु पुनर् बालमात्त्रस्य स्पृहणीयताम्। विलोक्य विदुषाञ् चैव बालानाञ् च कृते हितम्॥ न चाऽतिविस्तृतन् नाऽतिसङ्क्षिप्तं सारगर्भकम्। पदवाक्याभिसन्धीनां स्फोरकं विशदं स्फुटम्॥ प्रमाणवाक्यैः पूर्वेषां युक्तं सन्तुलनात्मकम्। न केवलम् परोक्तस्यैवार्थस्य प्रतिपादकम्॥ व्याख्यानमिदमाहार्षमुपग्रा-ह्यतया नवम्। भूयादिदम् बुभुत्सूनां विदुषाञ् च समम् प्रियम्॥ काश्मीरकैर् वाङ्गकैश् च काशिकैर् मैथिलैरपि। दाक्षिणात्त्यैर् मद्ध्यदेशश्यैर् विद्वद्भिर् विविधैरपि॥ मीमांसकैस् तार्किकैश् च यतिभिर् धर्मशास्त्रिभिः। काव्यप्रकाशो व्याख्यातो नैव नैपालकेन

तु ।। इति मे कौतुकमभूद् व्याख्यानेऽत्र प्रवर्तितुम् । तदिदञ्च कौतुकञ् चाद्योपशान्तिमगमन् मम " इति । एषा विवृतिः २०३७तमे वैक्रमेऽब्दे वाराणस्याम् मोतीलालबनारसिदासेन मुद्रिता प्रकाशिता उपलभ्यते । त्रितुङ्गाचलमण्डलान्तर्गत–चुँदिताम्रकूटग्रामाभिजन–तुलसीरामाचार्यदौहित्र-काष्ठमण्डपनगरवास्तव्या-ऽर्ज्यालवीरेन्द्रकेसरिणाऽपि नैपालकेन काव्यप्रकाशव्याख्या कृताऽभूदिति श्रूयते । किन्तु निश्चयो नाऽस्ति । सा नैवोपलभ्यते । साऽऽसीत्, किन्तु सर्वथा नष्टेति च के चन वदन्ति । तस्माद् हैमवती एव नैपालकेन विदुषा कृता प्रथमा उपलभ्यमाना काव्यप्रकाशव्याख्याऽस्ति । अत्रभवता कौण्डिन्न्यायनशिक्षाख्या महाशिक्षा च रचिताऽस्ति । सा च मुद्रितप्राया प्रकाशनोन्मुखी वर्तते । तथैव पाणिनीयव्याकरणाष्टाध्याय्या अत्यावश्यक–गणपाठ-भाष्येष्टिवार्त्तिकादि–सहितः कण्ठस्थीकरणीयः पाठश् च सम्पादितो वर्तते तत्रभवता । वेदभाषानिघण्टुश् च सामिरचितोऽस्ति । एते ग्रन्था यथावसरम् प्रकाशयिष्यमाणास् सन्ति ।

## १६६. रामकृष्णप्रपन्नः ( १९९७ वै.– )

गोठुराइचाम्लिङपौत्त्रो धम्मेराइचाम्लिङपुत्त्रो दिलमायाकुक्षिजो रामकृष्णप्रपन्नस् सिद्धिवैतथ्यन् नाम तार्किकग्रन्थं रचयामास । स्वरचितयाऽनुसन्धानात्मिकया भूमिकया विविधाभिः पञ्जिकाभिश् च सयं योज्य स्वयम्प्रकाशानन्दस्य वेदान्तनयभूषणग्रन्थस्य सम्पादनञ् च स चकार । एतौ द्वावपि ग्रन्थौ मुद्रितावुपलभ्येते ।

## १६७. ज्योतिःप्रकाशो जोसिः (१९९८ वै.–)

नैपाल–बजाङमण्डलान्तर्गत–थलाराग्रामनिवासी लक्ष्मीनारायणपुत्त्रो ज्योतिःप्रकाशो जोसिः मर्त्याधिकाराख्यं ग्रन्थं रचयामास । स च ग्रन्थो मुद्रितोऽवगम्यते ।

## १६८. मुकुन्दशरण उपाध्यायः पौडेलः (२००० वै.–)

नैपाल–कास्किमण्डलान्तर्गत – छाङजाग्रामाभिजनः पौष्करावतपुरनिवासी दशरथपुत्त्रो हरिदासबाबा–प्रेमचैतन्यब्रह्मचार्यादिशिष्यो मुकुन्दशरण उपाध्यायः पौडेलो निम्बार्कचरितम् (२०१७), शरणागतिशतकम् (२०१७), शैलसरिताख्यल्ँ लघुम् पद्यसङ्ग्रहम् च रचयामास । ते च ग्रन्थाः कोष्ठकेषु सङ्केतितेषु वर्षेषु मुद्रिता अवगम्यन्ते ।

## १६९. ठाकुरप्रसाद आचार्यः(२००१ वै.–)

नैपाल–पिउठानमण्डलान्तर्गत–खैराग्रामाभिजनष् टीकारामपुत्त्रष्

ठाकुरप्रसाद आचार्यश् शिवलहरीं स्तवकाव्यं रचयामास। तच्च काव्यम् २०४२तमे वैक्रमेऽब्दे मुद्रितमुपलभ्यते ।

## १७०. विष्णुराज आत्रेयः (२००२ वै.–)

नेपाल–गुल्मिमण्डलान्तर्गत–मर्भुङ्ग्रामाभिजनस् तौलिहवानगरनिवासी काष्ठमण्डपनगरे व्याप्रियमाणो योगिदासकुलजो रश्मिराजपौत्रो देवराजपुत्रो विष्णुराज आत्रेयः [ अर्ज्यालः ] 'किमुपहरामि' इत्यङ्कितमाधुनिकशैलीकं संस्कृतगद्यकवितासङ्ग्रहं रचयामास । स च सङ्ग्रहो मुद्रित उपलभ्यते । अन्ये तु तस्य संस्कृतग्रन्था द्रष्टुमपि अप्राप्या नामतोऽपि नैव परिचीयन्ते ।

## १७१. स्थानेश्वरो गौतमः (२००७ वै.–)

नेपाल–पिउठानमण्डलान्तर्गत–क्वाडिग्ग्रामाभिजनो दाङनिवासी हरिकृष्णपुत्रो वेदकुमारीकुक्षिजस् स्थानेश्वरो गौतमो हरिप्रसादेनाऽऽचार्येण सह सम्भूय अनुसन्धानप्रकाशाख्यल्ँ लघुं ग्रन्थं रचयामास । स च ग्रन्थस् त्रिभुवनविश्वविद्यालय-संस्कृताध्ययन-संस्थान-केन्द्रियसंस्कृतविद्यापीठेन दाङबेलझुण्डिस्थेन प्रकाशितः २०४२तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते ।

## १७२. पवनकुमारः खनालः (२०१६ वै.–)

नेपाल–काष्ठमण्डपनगरान्तर्गतत्रिपुरेश्वरटोल्लकनिवासी हर्षनाथपौत्रो गुणराजपुत्रश् शेषकुमारीकुक्षिजः पवनकुमारः खनालस् संस्कृतभाषायान् दुर्बलोऽपि संस्कृतभाषाम् प्रति श्रद्धाम् प्रकटयन् पुष्पाञ्जलिनामकल्ँ लघुं स्तवकाव्यसङ्ग्रहं रचयामास । स च सङ्ग्रहः २०४७तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते ।

## १७३. ऋषिप्रसादशर्मा [रिजालः] (२०१७ वै.–)

नेपाल–दैलेखमण्डलान्तर्गत – दुर्लङ्घ्य (दुल्लु) – नगराभिजनः काष्ठमण्डपनगरनिवासी कृपारामपौत्रो नारायणदत्तपुत्रः कृष्णकुमारीकुक्षिज ऋषिप्रसादशर्मा खलु 'चाँदनीशाहरचिता गीतिकविताः' इत्यङ्कितं रूपान्तरणात्मकं गीतिकवितासङ्ग्रहं रचयामास । स च सङ्ग्रहो नेपालटेलिविजनाधिकृतेन प्रकाशितो मुद्रित उपलभ्यते ।

## १७४. गोविन्दप्रसादशर्मा [सापकोटाः] (२०१९ वै.–)

नेपाल–प्याग्दिमण्डलान्तर्गत बिमिराकोटग्रामाभिजनश् श्रीधरादिशिष्यो गोविन्दप्रसादशर्मा खलु पाणिनीयव्याकरणस्यैतिहासिकम् परिशीलनन् नाम ग्रन्थं रचयामास । स च ग्रन्थोऽयोध्यायाम् २०४७तमे वैक्रमेऽब्दे मुद्रित उपलभ्यते ॥

## १७५. राघवदेव:

राज्ञश् शङ्करदेवस्य समये (११२६ वं. ?) राघवदेव: खलु धर्मपुत्त्रिकेति शैवसिद्धान्तग्रन्थं रचयामास किल ।

## १७६. भिक्षुपूजित-श्रीज्ञान:

राज्ञो रुद्रदेवस्य समये (१२१४-१२३३ वं. ?) भिक्षुपूजित-श्रीज्ञानो बौद्धधर्मविषयन् धर्मसमुच्चयञ् चकार किल ।

## १७७. गोविन्दशील:

राज्ञो रुद्रदेवस्यैव समये वैद्यो गोविन्दशील: खलु योगसारसारसमुच्चयम्, पिङ्गलमतम्, शिवधर्मशास्त्रादिकञ् च रचयामास किल ।

## १७८. हरिवंशशर्मा

नैपाल-ललितपुरराजश्रीनिवासमल्लसमये (१७१७-१७४१ वं.) वर्तमानो ललितपुरनिवासी हरिवंशशर्मा (राजोपाद्ध्याय:) श्रीनिवासमल्लादि-शिलालेखपद्यानि, मयूरकविकृतसूर्यशतकटीकाम्, प्रश्नोत्तरं संस्कृतकाव्यम्, नीतिभुजङ्गप्रयातञ् च रचयामास किल । एतद्विषये पूर्णिमाया अष्ट-चत्वारिंशत्तमेऽङ्के विवरणम् प्राप्यते । एकविंशतिपद्यात्मकन् नीतिभुजङ्ग-प्रयातन् तत्र प्रकाशितमप्यस्ति। प्रश्नोत्तरञ् च हरिवंशवंशधरेण ऐश्वर्यधरेण सम्पादितन् तन्नेरीति पत्रे (व. २, अ २; २०३७) प्रकाशितमवगम्यते ।

## १७९. राजा सुमतिजयजितामित्रमल्ल: (शा.का. १७२९-१७५३वं.)

नैपाल-भक्तपुरराजस् सुमतिजयजितामित्रमल्ल: खलु जैमिनिभारत-नाटकम्, मदालसाहरणम्, गोपीचन्द्रनाटकम्, महाभारतनाटकम्, रामायण-नाटकञ् च रचयामास किल । एतानि नाट्यकाव्यानि प्रायेण गीतिनाट्य-रूपाणि लोकभाषाप्रधानानि विरलसंस्कृतपद्यकानि चाऽवगम्यन्ते ।

## १८०. नरहरिर् नाथ: (?-)

नैपाल-जुम्लामण्डलान्तर्गत-लालुग्रामान्त:पातिठाँटिकोटग्रामटिका-भिजनस् थापाकुलजो नरहरिर् नाथ: शान्तिचरितङ् काव्यम् (२०२५) अन्यो-क्तिमुक्तावलीञ् (२०३५ ?) च रचयामास । तेन भक्तविजयकाव्ये टीकाऽपि कृताऽस्ति । एते सर्वे ग्रन्था मुद्रिता उपलभ्यन्ते ।।



"वैदुष्यमिच्छता कार्यं सद्विद्वद्गुणकीर्तनम् ।
विदुषोरश्विनो: कीर्त्या कक्षीवानप्यभूद् विदन् ।।"

# साहाय्यविवरणम्

नैपालसंस्कृतज्ञरचितमुद्रितसंस्कृतग्रन्थानाम् प्रदर्शन्या आयोजने पुस्तकच्छायाप्रतिलिपिकरणादौ च जातस्य २१८६।- रूप्यकात्मकस्य व्ययस्य, 'कतिपय-नैपाल-संस्कृतग्रन्थकारपरिचय'ग्रन्थस्य प्रकाशनाय सामग्रीणां सङ्कलने प्रकाशने उपोद्घातस्याऽनुमुद्रणे च जातस्य १०३९७।- रूप्यकात्मकस्य व्ययस्य च भारस्य वहनाय कृताया अर्थव्यवस्थाया विवरणम्--

१ छविलालसूरिप्रपौत्रदीपकप्रसादढुङ्गेलमहाशयात् प्राप्तम् दानम् १५००।-
२. हरिनाथपौत्रश्रीतिनाथप्याकुर्यालमहाशयात् ,, ,, १४३०।-
३. श्रीविनोदाऽग्रवालमहाशयात् ,, ,, ११००।-
४. नीलदेववंशधरभुवनदेवपन्तमहाशयात् ,, ,, १०००।-
५. गुणराजोपाध्यायपत्न्याः महाशयायाः ,, ,, १०००।-
६. श्रीसोमनाथघिमिरेमहाशयात् ,, ,, ५००।-
७. श्रीबखरामबहादुरबस्नेतमहाशयात् ,, ,, ५००।-
८. श्रीहरिशरणोपाध्यायमहाशयात् ,, ,, ५००।-
९. श्रीजदीशचन्द्राऽर्यालमहाशयात् ,, ,, ५००।-
१०. श्रीकमलमणिदीक्षितमहाशयात् ,, ,, ५००।-
११. श्रीवासुदेवपौडेलमहाशयात् ,, ,, ५००।-
१२. श्रीयोगेश्वरकृष्णपराजुलिमहाशयात् ,, ,, ५००।-
१३. श्रीसागरनाथप्याकुर्यालमहाशयात् ,, ,, ५००।-
१४. ललितपुरनिवासिश्रीहरिप्रसादपौडेलमहाशयात् ,, ,, ५००।-
१५. श्रीनरहरेः आचार्यात् महाशयात् ,, ,, ३००।-
१६. श्रीजगदीशप्रसादाऽग्रवालमहाशयात् ,, ,, २५०।-
१७. श्रीगोविन्दटण्डनमहाशयात् ,, ,, २०१।-
१८. श्रीकेसरबहादुरराजभण्डारिमहाशयात् ,, ,, २००।-
१९. श्रीकल्याणप्रसादोपाध्यायमहाशयात् ,, ,, १२१।-
२०. श्रीमणिप्रसादतिवारिमहाशयात् ,, ,, १००।-
२१. श्रीकेशवनाथप्याकुर्यालमहाशयात् ,, ,, १००।-
२२. श्रीश्यामप्रसादखरेलमहाशयात् ,, ,, १००।-
२३. अन्येभ्योमहाशयेभ्यः ,, ,, २१०।-
२४. कौण्डिन्यायनशिक्षाप्रकाशनकोषाद् गृहीतं सामकम् ऋणम् ५००।-
२५. वैदिकसमाजवादिलोकतान्त्रिकसंस्कारप्रवर्धनसभातो ,, ,, ,, ९७१।-

(द्रष्टव्यम्-अत्र ग्रन्थकारविशेषच्छायाचित्रसमावेशनन् तदर्थप्राप्तसाहाय्यविशेषाधीनम्)।